श्रीः ।

शाङ्करभाष्यस्थव्युत्पत्तिसहितं चन्द्रिकाख्य-
भाषाटीकासमलंकृतं

# श्रीविष्णोर्नामसहस्रम् ।

महावनाख्यविदुषा निर्मिता चन्द्रिका त्वियम् ।
विष्णोर्नामसहस्रस्य हैन्दव्या भाषया स्फुटम् ॥

तच्च

श्रीकृष्णदासात्मज गङ्गाविष्णुना

स्वकीये-

"लक्ष्मीवेङ्कटेश्वर"

मुद्रणागारे मुद्रितम् ।

कल्याण-(मुम्बई)

शकाब्दाः १८१५ संवत् १९५०

लक्ष्मीवेङ्कटेश्वराय नमः।

निरुक्ति निर्वचन दो व्याख्याओंसे युक्त भगवद्गुणदर्पणाख्य विष्णुसहस्रनामभाष्यकी और विष्णुसहस्रनामदीपिकाकी तथा विष्णुसहस्रनाम चन्द्रिकाकी—

# जाहिरखबर।

अनुष्टुप्श्लोकात्मक निरुक्तिव्याख्यासमेत और प्रकृतिप्रत्ययको दिखानेवाले पाणिनिसूत्रोंसे गर्भित ऐसी निर्वचन नामक द्वितीयव्याख्यासें युक्त भगवद्गुणदर्पणनामक विष्णुसहस्रनामभाष्य और उक्तभाष्यके अनुसार विष्णुसहस्रनामका व्युत्पत्तिसहित हिंदीभाषामें दीपिका नामक ग्रंथ तथा शाङ्करभाष्यके अनुकूल विष्णुसहस्रनामका व्युत्पत्तिसहित हिंदीभाषामें चन्द्रिकानामक ग्रन्थ सो यह तीनों पुस्तकें अत्यंत सुंदर छोटे बडे अक्षरोंमें छपतेहैं तिन पुस्तकोंको जिन महाशयोंको लेनेकी और देखनेकी इच्छा हो उन्होंनें शीघ्र सूचना करना तब उक्तपुस्तकोंको भेजनेमें उद्यत होवेंगे।

## गङ्गाविष्णु श्रीकृष्णदास

## लक्ष्मीवेङ्कटेश्वर छापाखाना कल्याण—मुम्बई.

गोविन्दराजीयभूषणाख्यया तनिश्लोक्याख्यया रामानुजीयाख्यया च व्याख्यया समेतस्य श्रीवाल्मीकिरामायणस्य—

# प्रसिद्धिपत्रिका।

भो भो विद्यापारावारपारीणा इदं विदाङ्कुर्वन्त्वत्रभवन्तः तनिश्लोक्याख्यया भूषणाख्यया रामानुजीयाख्यया च व्याख्यया समेतं श्रीवाल्मीकिरामायणम् अत्युत्तमतैलङ्गदेशीय-द्राविडदेशीयपुस्तकमालोच्य पण्डितैः संशोधितम्, तच्च सम्प्रतिसुव्यक्तैः स्थूलसूक्ष्माक्षरैर्लक्ष्मीवेङ्कटेश्वर-मुद्रणयन्त्रे

मुद्यते, तस्य च नागेशप्रभृतिविनिर्मिताः सन्ति यद्यपि बह्वचो व्याख्याः, तथापि सहृदयहृदयाह्लादकनानाविधाऽपूर्वार्थान्वेषणे प्रयतमानैरार्यकुलोचितधर्ममर्यादाविचारशीलैर्महाशयैर्निर्विशेषत्वेन सविशेषत्वेन च ब्रह्मस्वरूपप्रतिपादकवेदान्तवाक्यानां समीचीनतर्कसहकृतविषयभेदव्यवस्थापनेन तात्पर्यार्थनिर्णायकतया श्रीवाल्मीक्यभिप्रायानुगा रामानुजीयव्याख्या-तनिश्लोकीव्याख्यासमेता भूषणाख्यव्याख्याऽवश्यं निरीक्षणीयेति, मन्येऽहं निरीक्षणेनाभिज्ञानामवश्यं जिघृक्षा भवेदिति ।

श्रीः ।

श्रीमल्लक्ष्मीवेङ्कटेश्वराय नमः ।

# विष्णुसहस्रनामचन्द्रिकायां

## उपोद्घातप्रारम्भः ।

नमस्तस्मै रमेशाय निर्मलज्ञानराशये ।
अचिन्त्यचित्ररचनं यत्संकल्पभवं जगत् ॥
भाष्यं श्रीशाङ्करं बुद्ध्वा श्रुतिवृन्दसमन्वितम् ।
विष्णोर्नामसहस्रस्य चन्द्रिकेयं प्रतन्यते ॥

इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः "नसपुनरावर्तत" इतिश्रुत्या मोक्षस्यै व नित्यपरमपुरुषार्थत्वेन निर्णीतत्वात् तदितरेषां च तद्यथेह "कर्मचितोलोकः क्षीयते" एवमेवामुत्रपुण्यचितोलोकःक्षीयते इतिश्रुत्या च क्षयिष्णुत्वेन नित्यत्वावगमात्. तादृशमोक्षावाप्तये शतशः साधनानुष्ठानप्रकाराः परमर्षिभिः प्रदर्शिताः ते च साङ्गोपाङ्गतया अनुष्ठिताः सन्त. एवाभीप्सितफलमुत्पादयितुमलम्. सांप्रतं कलिमहिम्ना भूरिविघ्नेऽदभ्रसमयसाध्ये साधनानुष्ठाने न केपि पुरुषा प्रवर्तन्ते प्रवर्तन्ते चाल्पकालसाध्य एवेति. "ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥ गङ्गास्नानसहस्रेषु पुष्करस्नानकोटिषु । यत्पापं विलयं याति स्मृते नश्यति तद्धरौ ॥ यस्मिन्न्यस्तमतिर्नयाति नरकं स्वर्गोपि यच्चिन्तने । विघ्नो यत्र निवेशितात्ममनसो ब्रा-

ह्मोपि लोकोल्पकः ॥ मुक्तिं चेतसि यत्स्थितोऽमलधियां पुंसां ददात्यव्ययः । किंचित्रं तदघं प्रयाति विलयं तत्राच्युते कीर्तिते" ॥ इत्याद्युक्तप्रकारेण वाङ्मात्रसाध्यभगवन्नामकीर्तनमेवसकलमोक्षसाधनेषु मुख्यतया मन्तव्यमिति तत्प्रदर्शनपरो भगवतो विष्णोः श्रीविष्णुसहस्रनाम्नामध्यायः परमप्रामाणिकेन श्रीबादरायणमहर्षिणा श्रीमहाभारते आनुशासनिके पर्वणि दानधर्मे संगृहीतः तदुपरि यच्छ्रीशङ्कराचार्यैर्भाष्यं निर्मितं तत्प्रदर्शितमार्गानुसारेण निखिलजनोपकृतये श्रीविष्णुसहस्रनाम्नो नृभाषया किंचिदर्थो निरूप्यंते.

वैशम्पायनः जनमेजयमुवाच ।

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ॥
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ १ ॥

अर्थ—परमसौहार्दसें अत्यन्तगुप्तवस्तुको जनमेजयके अर्थ ग्रहणकरातेहुये श्रीवैशंपायनजीबोले कि ऐसेधर्मराजानें (धर्मान्) अभ्युदयनिःश्रेयसोत्पत्तिभूतान् नाम राजधर्म, मोक्षधर्म, दानधर्म और पापक्षयकरनेवाले तीर्थसेवनादिक सर्वप्रकारसें श्रवणकर साक्षाद्धर्मकेपुत्र युधिष्ठिरजी (शान्ततवं) शन्तनुकेपुत्र भीष्मजीसें फिर पूंछने लगे ॥ १ ॥

युधिष्ठिर उवाच ।

किमेकं दैवतं लोके किंवाप्येकं परायणम् ॥
स्तुवन्तः कंकमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ २ ॥

अर्थ—युधिष्ठिरजी बोले कि लोकमें सर्वोत्तम देवता कौनहै और एकप्राप्यहोनेकेलायक कौनहै और किंसकेगुणसंकीर्तनमात्र-

करके और किसका आराधनकरतेहुवे और किसकीस्तुति करनेसें मनुष्यका कल्याण होताहै ॥ २ ॥

को धर्मः सर्वधर्माणां भवतः परमो मतः ॥
किंजपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ ३ ॥

अर्थ—सब धर्मोंमें कौनधर्म आपके परमसंमतहै और किसनामका जपकरनेसें प्राणी जन्म-मरण-रूपी संसारबन्धनसें छूटजाताहै. युधिष्ठिरजीनें इहाँ पांचप्रश्न किये. कौनसा बडादेवताहै १ और कौनसा प्राप्तहोनेलायकहै २ किसकी पूजा और किसकी स्तुति करनेसें मनुष्यका कल्याण होताहै ३ सबधर्मोंमें आपके परमसंमत कौन धर्महै ४ किसनामका जपकरनेसें पुनर्जन्म नहीं होताहै५ ॥ ३ ॥

भीष्म उवाच ।

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ॥
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥ ४ ॥

अर्थ—भीष्मजी बोले कि, पुरुष सदा उठकर जगत्के स्वामी और देवतोंके देव अनन्त पुरुषोत्तम भगवान्के सहस्रनामकी स्तुति करनेवाले पुरुष संसारसें छूटजाताहै ॥ ४ ॥

तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ॥
ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ५ ॥

अर्थ—सहस्रनामसें तिस परमात्माकी स्तुति निरन्तर जो पुरुष करताहै वह पुरुष जन्ममरणसें छूटजाताहै उसी अव्यय नाम अविनाशी पुरुषपदवाच्य भगवान्की भक्तिसहित नित्य पूजा और ध्यानपूर्वक स्तुति नमस्कार करनेसें यजमान नामपूजन करनेवाला पुरुष सब दुःखसें छूटजाताहै ॥ ५ ॥

अनादिनिधनंविष्णुं सर्वलोकमहेश्वरम् ॥
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ ६ ॥

अर्थ—आदि अन्त शून्य सब जगत्में व्याप्त सब लोकके महेश्वर अर्थात् ब्रह्मादिक ईश्वरोंकेभी ईश्वर ( लोकाध्यक्ष ) नाम सर्वलोकके साक्षी अर्थात् द्रष्टा ऐसे अनन्त लोकके स्वामीकी स्तुति करनेसें तापत्रयरूप अग्निको उल्लंघनकर अनेक भगवत्स्वरूपको प्राप्त होजाताहै ॥ ६ ॥

ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ॥
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७ ॥

अर्थ—ब्राह्मणोंके हितरूप सब धर्मोंके जाननेवाले, समस्त प्राणियोंकी कीर्तिको वर्धन करनेवाले, लोकके नाथनाम स्वामी, अर्थात् शिक्षा देनेवाले, (महद्भूतं) महत् नाम ब्रह्मविद्यासे परिपूर्ण और भूतनाम परमार्थस्वरूप (सर्वभूतभव ) नाम संसार जिससें संसारकी उत्पत्तिहै उसको "सर्वभूतभवोद्भव" कहतेहै ॥७॥

एष मे सर्वधर्माणां धर्मोधिकतमो मतः ॥
यद्भक्त्यापुण्डरीकाक्षं स्तवैरर्चेन्नरःसदा ॥ ८ ॥

अर्थ—समस्त कहेहुवे बडे बडे धर्मोंमें बहुत बडा अत्यन्त निःश्रेयसकर धर्म यहीहै जो पुण्डरीकाक्ष भगवान्की स्तुतिसें भक्तिपूर्वक पूजन निरन्तर करतारहै यही सबसे बडा धर्म हमारा संमतहै, और अन्य परमर्षियोंकाभी संमतहै तदुक्तं मनुस्मृतौ "जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" ॥ महाभारतेपि—" जपस्तु सर्वधर्मेभ्यः परमो धर्म उच्यते । अहिंसया च भूतानां जपयज्ञः प्रवर्तते " ॥ ८ ॥

परमं यो महत्तेजः परमं यो महत्तपः ॥
परमं यो महद्ब्रह्म परमं यः परायणम् ॥ ९ ॥

अर्थ—जो परमतेजस्वरूप अर्थात् जिसके तेजसें सूर्यभी जगत्को प्रकाश कररहाहै और बडी तपनाम आज्ञादेनेवाले अन्तर्यामिरूप "यद्भयाद्वाति वातोयं सूर्यस्तपति यद्भयात् । वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति यद्भयात्" ॥ परब्रह्म जो सत्यस्वरूप, ज्ञान स्वरूप, अनन्तस्वरूपहैं महत् नाम पूज्य परायणनाम जहाँ जायके फिर आवे नहीं ॥ ९ ॥

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ॥
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥ १० ॥

अर्थ—समस्त तीर्थोंको जो पवित्र करै ध्यानसें दर्शनेसें स्तुतिकरनेसें पूजन स्मरण प्रणाम करनेसें सब पापोंके जडकी जो उन्मूलन करतेहैं सोही परमपवित्र पुण्य पाप जो संसारके हेतुहैं उनका कारण अज्ञानहै उसका नाश आत्मज्ञानसें जो करै सो सब पवित्रोंमें पवित्रहै तथाचोक्तं "कलावपि च दोषाढ्यो विषयासक्तमानसः । कृत्वापि सकलं पापं गोविन्दं संस्मरन् शुचिः ॥ शाठ्येनापि नमस्कारः प्रयुक्तश्चक्रपाणये । संसारस्थूलबन्धाना मुद्वेजनकरो हि सः" ॥ मंगलनाम कल्याण, समस्त मंगलोंकेभी मंगल अर्थात् परम कल्याणस्वरूप उसके साधन, देवतोंके देवता, भूत कहिये प्राणियोंके एकपिता, अर्थात् पालनकर्ता और अविनाशी जिसका नाश नहींहै वही इसलोकमें मुख्य देवताहै यह ( किमेकं ) इस प्रश्नका उत्तरहैं तथाचोक्तं "ज्ञानह्रदे ध्यानजले रागद्वेषमलापहे । यः स्नाति मानसे तीर्थे स याति परमां गतिम् ॥

आत्मानदी संयमतोयपूर्णा सत्यावहा शीलतटादयोर्मिः। तत्राभिषेकं कुरु पाण्डुपुत्र न वारिणा शुद्धयति चान्तरात्मा " इति ॥ १० ॥

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ॥
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११ ॥

अर्थ—जिससें सत्ययुगके प्रथममें सब प्राणी उत्पन्न होतेहैं युगके क्षयनमें महाप्रलयमें और प्रलयके पहिलेभी फिर सबजीव जिसमें लयहोतेहैं ॥ ११ ॥

तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ॥
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १२ ॥

अर्थ—हेभूपते ! तिसहीलोकके प्रधानभूत और जगत्के स्वामी जो विष्णुभगवान् तिनका सहस्रनाम जो पाप और भयको नाश करनेवालाहै उसको मन चित्त एकाग्रकर हमसें श्रवणकरो ॥१२॥

यानि नामानि गौणानि विख्यातानि महात्मनः ॥
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥१३॥

अर्थ—जिन गुणसहितनामोंको महात्मालोगोंने प्रसिद्ध कियाहै और सब ऋषिलोगोंने गायाहै उनको ( भूतये ) नाम धर्म, अर्थ, काम, मोक्षमिलनेके वास्ते मैं कहताहूं ॥ १३ ॥

## इति श्रीविष्णुसहस्रनामचन्द्रिकायां भाषाटीकायामुपोद्घातःसमाप्तः।

श्रीः ।

# विष्णुसहस्रनामचन्द्रिकायां

## (भाषाटीकायां)

## प्रथमशतकप्रारम्भः ।

यतः सर्वाणि भूतानीत्यारभ्य जगदुत्पत्तिस्थितिलयकारणब्रह्मणः एकदैव तत्त्वेनाविहितत्वादादावुभयविधं ब्रह्म विश्वशब्देनोच्यते ।

**ॐ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ॥ भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥ १ ॥**

विश्वस्य जगतः कारणत्वेन विश्वमित्युच्यते ब्रह्म १ यद्वा परस्मात् पुरुषान्न भिन्नमिदं विश्वं परमार्थतस्तेन विश्वमित्यभिधीयते ब्रह्म २ यद्वा विशतीति विश्वं ब्रह्म ३ यद्वा संहृतौ विशन्ति सर्वाणि भूतान्यस्मिन्निति विश्वं ब्रह्म ४ यद्वा सकलं जगत् कार्यभूतमेषः विशत्यत्र चाखिलं विशतीत्युभयथापि विश्व-

म् ५-[विश्वम्]

अर्थ—संपूर्ण जगत्के कारणरूप परब्रह्म १ समस्त जगत्स्वरूप हैं २ जो संसारको उत्पन्नकर स्वयं अपनेमें प्रवेश करें ३ प्रलयमें सब जगत् जिसके विषे लीन होजाय ४ जगत्में प्रवेश करनेवाले जिसमें जगत्प्रविष्ट ५

ॐ कारशब्दार्थस्तुशाङ्करभाष्ये द्रष्टव्यः विस्तरभयान्न लिख्यतेऽस्माभिः।

## २ वेवेष्टि व्याप्नोतीति–[ विष्णुः ]

अर्थ—देशकालवस्तुपरिच्छेदशून्य. अर्थात् सर्वजगत्में सर्वकालमें व्याप्तहै. (प्र०) "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इतिश्रुतिः।

## ३ यदुद्देशेन वषट्क्रियावषट्कारादिमन्त्रात्मना देवान् प्रीणयतीतिवा–[ वषट्कारः ]

अर्थ—जिसकी प्रसन्नताकेलिये वषट्शब्दोच्चारणपूर्वक हवनक्रिया वषट्कारादि मंत्ररूपसे ब्रह्मादिक देवतोंको संतुष्टकरतेहै जिसवास्ते ( वषट्कार ) ऐसाभी कहतेहैं २

## ४ भूतं भव्यं भवच्च भूतभव्यभवन्ति तेषां प्रभुरिति–[ भूतभव्यभवत्प्रभुः ]

अर्थ—भूत, भविष्यत्, वर्तमान तीनों कालवर्तिपुरुषोंके नियन्ता.

## ५ रजोगुणं समाश्रित्य विरिञ्चिरूपेण भूतानि करोतीति–[ भूतकृत् ]

अर्थ—रजोगुणके आश्रयसें विरंचिरूप ( ब्रह्मा ) होके समस्त प्राणियोंकी उत्पत्ति करनहारे.

## ६ सत्त्वगुणमाश्रित्य विष्णुरूपेण सर्वाणि भूतानि

विभर्तीति-[ भूतभृत् ]

अर्थ-सत्वगुणसें विष्णुरूपहोकर निखिल (संपूर्ण) प्राणियोंके रक्षक.

७ प्रपञ्चरूपेण भवतीति केवलं भवत्येवेति भवनं भावः सत्तात्मकः इति-[ भावः ]

अर्थ-जगद्रूप होकर वासकररहाहै इसलिये सत्तात्मक अर्थात् सत्तास्वरूप है.

८ भूतानामात्मान्तर्यामीति-[ भूतात्मा ]

अर्थ-संपूर्णप्राणियोंके अंतर्यामी. (प्र०) "एषतअन्तर्यामीति" श्रुतिः।

९ भूतानि भावयति वर्द्धयतीति-[ भूतभावनः ]

अर्थ-संपूर्ण प्राणिमात्रकी उत्पत्ति करनेवाले.

**पूतात्मा परमात्मा च मुक्तानांपर-**
**मागतिः ॥ अव्ययः पुरुषः साक्षी**
**क्षेत्रज्ञोऽक्षर एव च ॥ २ ॥ ॥**

१० पूतः आत्मा यस्य सः कर्मधारयो वेति-[ पूतात्मा ]

अर्थ-तिनोंगुण तथा जन्म-कर्म-प्रयुक्तदोष यह जिसमें हैनहीं. (प्र०) "केवलो निर्गुणश्चेति" "गुणोपरागः स्वेच्छातः पुरुषस्येति कल्प्यते" इति.

११ परमश्चासावात्मा चेति-[ परमात्मा ]

अर्थ-कार्य कारणसें विलक्षण अर्थात् नित्यशुद्धमुक्तस्वभाव.

१२ मुक्तानां परमागतिर्गन्तव्या देवता पुनरावृत्त्य-

सम्भवात्तद्गतस्येति–[ मुक्तानांपरमागतिः ]

अर्थ–मुक्तपुरुषोंके परमगति अर्थात् जिसमें प्राप्त होकर फिर जन्ममरणादिरूप आवृत्ति नहींहोवे. ( प्र० ) "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति गी० ।

१३ न व्येति व्ययो विनाशो विकारो वा विद्यते इति–[ अव्ययः ]

अर्थ–जो नाशको प्राप्त नहीं होताहै अथवा विकारशून्य.( प्र० ) "अजोऽमर" इति श्रुतिः ।

१४ पुरं शरीरं तस्मिन् शेते इति–पुरूणि भुवनानि – संहारसमये ह्यन्तं करोतीतिवा–[ पुरुषः ]

अर्थ–पुरनाम शरीरोंमें निवास करनेवाले १ पुर नाम शरीरोंको प्रलयकालमें नाश करने वाले. २

१५ साक्षात् अव्यवधानेन सर्वं पश्यतीति–[ साक्षी ]

अर्थ–साक्षात्चैतन्यरूपसें समस्त जगत्को देखनेवाले.

१६ क्षेत्रं शरीरं जानातीति–[ क्षेत्रज्ञः ]

अर्थ–क्षेत्रनाम शरीरको जाननेवाले. ( प्र० ) "क्षेत्रज्ञं चापि मां विद्धीति" गी० । "क्षेत्राख्यानि शरीराणि तेषां चैव यथासुखम् । तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते" इति ।

१७ स एव न क्षरतीति–[ अक्षरः ]

अर्थ–जो कदाचित्भी क्षरण नहीं होवे. परमार्थदशामें. क्षेत्रक्षेत्रज्ञका अभेदको एवकार सूचन करताहै और व्यवहारदशामें क्षेत्रक्षेत्रज्ञके भेदको चकार सूचन करताहै.

योगो योगविदांनेता प्रधानपुरुषे–

श्वरः ॥ नारसिंहवपुः श्रीमान् केश-
वः पुरुषोत्तमः ॥ ३ ॥ ॥

१८ ज्ञानेन्द्रियाणि सर्वाणि निरुध्य मनसा सह।
एकत्वभावनायोगः क्षेत्रज्ञपरमात्मनो-
रिति-[योगः]

अर्थ-मनःसहित संपूर्ण इन्द्रियोंको रोककरके जीव तथा परमात्माका जो एकत्र भावनाहै सोही योगकहिये. विष्णुमद्वाच्यहै.

१९ योगं विचारयन्ति जानन्ति लभन्ते इतिवा-
योगविदः तेषां ज्ञानिनां योगक्षेमवहना-
दिना नेतेति-[योगविदांनेता]

अर्थ-ज्ञानीजनोंके योगक्षेमकरनेवाले.

२० प्रधानं प्रकृतिर्माया पुरुषो जीवस्तयोरीश्वर
इति-[प्रधानपुरुषेश्वरः]

अर्थ-माया तथा जीव इन दोनोंके ईश्वर.

२१ नरस्य सिंहस्य च अवयवा यस्मिन् लक्ष्यन्ते
तद्वपुः यस्य सः-[नारसिंहवपुः]

अर्थ-जिनके शरीरमें नर नाम मनुष्य तथा सिंह इनकी तुल्य अवयव अङ्ग लक्षितहैं सोहीहै वपु नाम शरीर जिनका.

२२ यस्य वक्षसि नित्यं वसति श्रीरिति-[श्रीमान्]

अर्थ-जिनके वक्षस्थलमें लक्ष्मीजी नित्य निवासकरतीहै.

---

१ अलब्धवस्तुका लाभ। २। लब्धवस्तुकी रक्षा।

२३ अभिरूपाः केशा यस्य सः यद्वा कश्च अश्च ईशश्च त्रिमूर्तयः केशास्ते यद्वशेन वर्तन्ते सः यद्वा केशिहन्ता इति-[ केशवः ]

अर्थ-अभिरूपनाम सुन्दरहै केश जिनके १ ब्रह्मा विष्णु, महेश यह तीनोमूर्ति जिनके वशमेंहैं. २ दुष्टात्मा केशिनाम दैत्यकूं मारनेवाले ३ (प्र० ) "यस्मात्त्वया स दुष्टात्मा हतः केशी जनार्दन। तस्मात् केशवनाम्ना त्वं लोके गोपो भविष्यसि" इति वि०पु०।

२४ पुरुषाणामुत्तमः पुरुषेभ्यः उत्तमोवेति- [पुरुषोत्तमः]

अर्थ-पुरुषोंके मध्यमें वा पुरुषोंसे उत्तम (प्र०) "यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः। अतोस्मिन् लोके वेदे च प्रथितः पुरुषोत्तमः" इति गी०।

सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ॥ संभवो भावनो भर्त्ता प्रभवः प्रभुरीश्वरः ॥ ४ ॥ ॥

२५ असतश्च सतश्चैव सर्वस्य प्रभवाप्ययौ। सर्वस्य सर्वदा ज्ञानात् सर्वमेनं प्रचक्षते ॥ इति-[ सर्वः ]

अर्थ-सत् और असत्के उत्पत्ति-स्थिति-विनाशके स्थान.

२६ शृणाति सकलाः प्रजा इति-[ शर्वः ]

अर्थ-सकल प्रजाके नाश करनेवाले.

२७ नैस्त्रैगुण्यतया शुद्धत्वात्-[शिवः]

अर्थ-त्रिगुणं रहित शुद्धस्वरूप. (प्र०) "स ब्रह्मा स शिव' इतिअभेदादेशाच्छिवादिनामभिर्हरिरेवश्रूयते ।

अर्थ-अपनी इच्छाकरकै अवतार लेनेवाले. (प्र०) "सभवामि युगे युगे" इति गी० ।

२८ स्थिरत्वात्-[स्थाणुः]

अर्थ-स्थैर्य (शान्त) स्वभाववाले.

२९ भूतानामादिः कारणत्वादिति-[भूतादिः]

अर्थ-संपूर्ण भूतमात्रके आदिकारण.

३० प्रलयेस्मिन् सर्वं निधीयत इति-निधिः स एव निधिर्विशिष्यते इति-[निधिरव्ययः]

अर्थ-प्रलयसमयमैं जिसमें संपूर्ण लय होय सो निधि कहिये जो सदा रहै कदाचित् भी नष्ट न होय सो अव्यय दोनों मिलकर एक नामहै.

३१ स्वेच्छया समीचीनं भवनंयस्येति-[संभवः]

३२ सर्वेषां भोक्तॄणां फलानि भावयतीति-[भावनः]

अर्थ-संपूर्ण भोक्तृजनोंको फल देनेवाले.

३३ प्रपञ्चस्याधिष्ठानत्वेन धारणात्-[भर्ता]

अर्थ-प्रपंचके अधिष्ठान होके प्रपञ्चको धारण करनेवाले.

३४ प्रकर्षेण महाभूतानि अस्माज्जायन्ते प्रकृष्टो भवो जन्मास्येति वा-[प्रभवः]

---

१ सत्त्वगुण । रजोगुण । तमोगुण ।

अर्थ–प्रकर्षनाम उत्तमरीतिसे जिससें महाभूत उत्पन्नहोतेहैं १ प्रकृष्ट नाम उत्तमहै जन्म जिसका. २

३५ सर्वासु क्रियासु सामर्थ्यातिशयात्–[ प्रभुः ]

अर्थ–संपूर्ण क्रियानाम व्यापारोंमें अत्यन्तसामर्थ्यवाले, अर्थात् अप्रतिहतशक्ति.

३६ निरुपाधिकमैश्वर्यमस्येति–[ ईश्वरः ]

अर्थ–उपाधिशून्य अर्थात् स्वाभाविक ऐश्वर्यवाले. ( प्र० ) "एष सर्वेश्वर" इतिश्रुतिः ।

**स्वयंभूः शंभुरादित्यः पुष्कराक्षो म-**
**हास्वनः ॥ अनादिनिधनो धाता**
**विधाता धातुरुत्तमः ॥ ५ ॥**

३७ स्वयं भवतीति–[ स्वयंभूः ]

अर्थ–स्वयंसिद्ध उत्पत्तिवाले. (प्र०) 'स एव स्वयमुद्बभौ' इति मनुः ।

३८ शं सुखं भक्तानां भावयतीति–[ शंभुः ]

अर्थ–भक्तोंको सुख देनेवाले.

३९ आदित्यमण्डलान्तःस्थो हिरण्मयः पुरुषः यद्वा द्वादशादित्येषु विष्णुः यद्वा अदितेरखण्डिताया अयं पतिः यद्वा यथा आदित्य एक एवानेकेषु जलभाजनेषु अनेकवत्प्रतिभासते एवमनेकेषु शरीरेषु एक एव आत्मा

अनेकवत्प्रतिभासत इति–
[आदित्यः]

अर्थ–सूर्यमंडलकेविषे सुवर्णमय पुरुष जो है सोही आदित्य. १ द्वादश आदित्योंकेविषे स्वयं विष्णु २ अदितिनाम विष्णुपत्नी तिसके पती ३ जैसे एक सूर्य अनेक जलपात्रोंमें अनेक रूपसें भासताहै तैसेही अनेक शरीरोंकेविषे एक आत्मा अनेकरूपसें भासताहै ४ (प्र०) "आदित्यानामहं विष्णुः" इति।

४० पुष्करेणोपमिते अक्षिणी यस्येति–[पुष्कराक्षः]

अर्थ–कमलके तुल्यहै जिनके नेत्र.

४१ महान् ऊर्जितः स्वनो नादो वा श्रुतिलक्षणो यस्य इति–[महास्वनः]

अर्थ–बडाहै शब्द जिसका १ जिसका शब्द वेदहीहैं २ (प्र०) "अस्य महतोभूतस्य निःश्वसितमेतदृग्वेदोयजुर्वेद" इति श्रुतिः।

४२ आदिर्जन्म निधनं विनाशस्तद्द्वयं न विद्यते यस्य स इति–[अनादिनिधनः]

अर्थ–जिन्होंका जन्म और विनाश नहींहोताहै.

४३ अनन्तादिरूपेण विश्वं बिभर्ति इति–[धाता]

अर्थ–अनन्त रूपसें संपूर्ण जगत्को धारण पोषण करनेवाले.

४४ कर्मणां तत्फलानां च कर्ता अनन्तादीनामपि धारकत्वाद्विशेषेण दधातीति वा–[विधाता]

अर्थ–कर्म तथा कर्मोंके फल रचनेवाले १ शेषनागादिकोंकेभी विशेषरूपसें धारण करनेवाले २.

४५ सर्वधातुभ्यः पृथिव्यादिभ्यः उत्कृष्टः चिद्रूपो-धातुः यद्वा धातुर्विरिञ्चेरुत्कृष्टः इति-[धातुरुत्तमः] कार्यकारणप्रपञ्चधारणाच्चिदेव-धातुः सर्वेषा-मुत्कृष्टानामतिशयेनोद्भवत्वादिति-उत्तमः

अर्थ-पृथिव्यादिक समस्त धातुओंसें उत्तम चैतन्यरूप धातु १ विरंचि ( ब्रह्मा ) सेंभी उत्कृष्ट २ सविशेषण एक नामहै. कार्य कारणरूप प्रपंचके धारणसें चिद्रूप धातुहै. संपूर्ण उत्कृष्टजनोंकें अतिशयसें उत्पत्तिवाले. धातुः तथा उत्तमः यह दोनो नाम पृथक्भीहै.

अप्रमेयो हृषीकेशः पद्मनाभोऽमर-
प्रभुः ॥ विश्वकर्मा मनुस्त्वष्टा स्थ-
विष्ठः स्थविरोध्रुवः ॥ ६ ॥ ॥

४६.शब्दादिरहितत्वान्न प्रत्यक्षगम्यः तद्व्याप्तलिङ्गा-भावात् नाप्यनुमानविषयः निर्धर्मत्वेन सादृश्या-भावान्नाप्युपमानासिद्धः तद्विनानुपपद्यमानत्वासं-भवात् नाप्यर्थापत्तिग्राह्यः भावत्वेन संमतान्ना-प्यभावगोचरः अभावसाक्षित्वाच्च न षष्ठप्रमा-णस्य गोचरः प्रमाणजन्यातिशयाभावात् नापि शास्त्रप्रमाणवेद्यः यद्येवं शास्त्रयोनि-त्वं कथमुच्यते प्रमाणादिसाक्षित्वेन प्रकाशस्वरूपस्य प्रमाणाविषयत्वे

अध्यस्तात्तद्रूपत्वेन शास्त्रप्रमाण-
त्वमिति-[ अप्रमेयः ]

अर्थ-परमात्मा षट् प्रमाणोंके गम्य नहींहै.

४७ साक्षित्वाद्धृषीकाणीन्द्रियाणि तेषामीशः क्षेत्र
ज्ञरूपभाक् यद्वेन्द्रियाणि यस्य वशे वर्तन्ते स
यद्वा यस्य सूर्यरूपस्य जगत्प्रीतिकरा-
हृष्टाः केशा रश्मयः इति-[हृषीकेशः]

अर्थ-समस्त इन्द्रियोंके ईशनाम स्वामी १ सब इन्द्रियें जिसके सूर्यादिरूपहोके आधीनहैं २ अपने केशनाम किरणोंसें जगत्का भला करनेवाले.

४८ जगत्कारणं पद्मं नाभौ यस्येति-[ पद्मनाभः ]

अर्थ-जगत्का कारणभूत पद्मनाम कमल जिनकी नाभिके-विषे. ( प्र० ) " अजस्य नाभावध्येकमर्पित " इतिश्रुतिः।

४९ अमराणां प्रभुरिति-[ अमरप्रभुः ]

अर्थ-अमर नाम सब देवतोंके स्वामी.

५० क्रियते इति कर्म विश्वं कर्म यस्य विचित्र-
निर्माणशक्तिमत्त्वात् विश्वकर्मा त्वष्टा त-
त्साहश्याद्वेति-[ विश्वकर्मा ]

अर्थ-विचित्र निर्माण शक्तिसें विश्वको करनेवाले १ जैसे विश्वकर्मा अपनी शक्तिसें सब विचित्र कार्य करताहै तैसें ईश्वरभी अपनी मायासें चित्रविचित्र रचना करतेहैं इस हेतुसें विश्वकर्मा यह नामहै २

५१ मननात्-[ मनुः ]

अर्थ—जो मनन करें सो मनु.

५२ संहारसमये सर्वभूततनूकरणत्वात्—[ त्वष्टा ]

अर्थ—संहारकालमें सब संसारको सूक्ष्मरूपसें अपनेमें लीन करनेवाले.

५३ अतिशयेन स्थूलः इति—[ स्थविष्ठः ]

अर्थ—सब स्थूलोंसे ( मोटे ) भी अत्यन्त स्थूल.

५४ पुराणः—[ स्थविरः ]

अर्थ—सबसें पुरातन अर्थात् प्राचीन.

५५ स्थिरत्वात्—[ ध्रुवः ]

अर्थ—सदा अचल रहनेवाले. यद्वा स्थविरोध्रुव ऐसा सविशेष एकही नामहै.

**अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ॥ प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् ॥ ७ ॥ ॥**

५६ कर्मेन्द्रियैर्नग्राह्यः इति—[ अग्राह्यः ]

अर्थ—जिसका ग्रहण इंद्रियोंसे अशक्य. ( प्र० ) "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुतिः ।

५७ शश्वत्सर्वेषु कालेषु भवतीति—[ शाश्वतः ]

अर्थ—निरन्तर सर्वकालमें रहनेवाले. ( प्र० ) "शाश्वतं शिवमच्युतम्" इति श्रुतिः ।

५८ कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।

विष्णुस्तद्भावयोगाच्च कृष्णोभवति शाश्वतः ॥
इति वचनात् सच्चिदानन्दात्मकः
इति-[ कृष्णः ]

अर्थ-कृषिशब्द सत्ताका वाचक, णशब्द सुखका वाचक, यह मिलकर ऐसा अर्थ है कि भगवान् सच्चिदानन्दस्वरूपहै.

५९ लोहिते अक्षिणी यस्य सः-[ लोहिताक्षः ]

अर्थ-रक्तकमलकी तुल्य विद्यमानहै नेत्र जिनके. (प्र० ) "असावृषभो लोहिताक्ष" इति श्रुतिः ।

६० प्रलये भूतानि प्रतर्दयतीति-[ प्रतर्दनः ]

अर्थ-प्रलयसमयमें भूतोंके नाश करनेवाले:

६१ ज्ञानैश्वर्यादिसंपन्नः-[ प्रभूतः ].

अर्थ-ज्ञान-ऐश्वर्यादिकोंसें परिपूर्ण.

६२ ऊर्ध्वाधोमध्यभेदेन तिसृणां ककुभामपि धामेति-[ त्रिककुब्धाम ]

अर्थ-ऊपर नीचे और बीच इन तीनोंदिशानके आधारनाम प्रकाश करनेवाले.

६३ येन पुनन्ति यो वा पुनाति तत्-[ पवित्रम् ]

अर्थ-जिसकरके इतरपुरुष पवित्र होनेवाले. जो ऋषि तथा देवतानको पवित्रकरै.

६४ अशुभानि निराचष्टे तनोति शुभसन्ततिं
स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं विदुरिति
विष्णुपुराणवचनात् कल्याणरूपत्वात्

सर्वभूतेभ्यः उत्कर्षतरं मङ्गलमिति-
[मङ्गलंपरम्]

अर्थ-अशुभोंको जो दूरकरे, शुभकर्मके-विस्तारको स्मृतिमात्रसें पुरुषोंका-जो वडाईकरें, उसका नाम मङ्गलहै. इसहेतुसें संपूर्ण प्राणिमात्रके परमात्मा उत्कृष्ट मङ्गलस्वरूपहैं.

**ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ॥ हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ ८ ॥**

६५ सर्वभूतनियन्तृत्वात्-[ईशानः]

अर्थ-संपूर्ण प्राणियोंके नियन्ता नाम प्रेरक.

६६ प्राणान् ददाति चेष्टयति यद्वा प्राणान् कालात्मना द्यति खण्डयति यद्वा प्राणान् दापयति शोधयति यद्वा प्राणान् दाति लुनाति इति-[प्राणदः]

अर्थ-प्राणके देनेवाले १ कालरूप होकर प्राणोंके नाशकरनेवाले २ प्राणनाम इन्द्रियोंके दर्शन, श्रवण, मनन, करनेसें शुद्ध करनेवाले ३ इन्द्रियोंके छेदन करनेवाले. ४

६७ क्षेत्रज्ञः परमात्मा प्राणिति मुख्यप्राणो वा-इति-[प्राणः]

अर्थ-जीवरूपसें तथा परमात्मरूपसें श्वासलेनेवाले १ मुख्यप्राणस्वरूप २ (प्र०) "प्राणस्य प्राणम्" इतिश्रुतिः ।

६८ वृद्धतमः इति-[ज्येष्ठः]

अर्थ-अत्यन्त सबसें बडे अर्थात् बडोंके बडे.

६९ प्रशस्यतम इति-[श्रेष्ठः]

अर्थ-अतिप्रशंसित अर्थात् अत्यन्त प्रशंसाके योग्य.

७० सर्वासां प्रजानां पतिः इति-[प्रजापतिः

अर्थ-समस्त प्रजाकेस्वामी.

७१ हिरणमय्याण्डान्तर्वर्तित्वात् विरिञ्च्यात्मना वा-[हिरण्यगर्भः]

अर्थ-सुवर्णमय अण्डेके मध्यमें रहनेवाले १ अथवा विरंचिस्वरूपनाम.आदिसृष्टिकर्ता (प्र०) "हिरण्यगर्भः.समवर्तत इतिश्रुतिः"

७२ भूर्गर्भो यस्य सः-[भूगर्भः]

अर्थ-सबोंका आधारभूत जो पृथ्वी तिसकें गर्भरूपहै-

७३ मायाः श्रियः धवः पतिरिति-[माधवः]

अर्थ-लक्ष्मीजीके पति.

७४ मधुनामानमसुरं सूदितवानिति-[मधुसूदनः]

अर्थ-मधुनाम असुरको मारनेवाले. (प्र०) "कर्णमिश्रोद्भवं चापि मधुं नाम महासुरम्। ब्रह्मणोपचितं कुर्वन् जघान पुरुषोत्तमः॥ तस्य तात वधादेव देवदानवमानवाः। मधुसूदन इत्याहुर्ऋषयश्च जनार्दनम्" इति।

ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः॥ अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान्॥ ९॥ ॥

७५ सर्वशक्तिमत्तया-[ ईश्वरः ]

अर्थ-सर्वशक्तिवाले.

७६ विक्रमैः शौर्यं तद्योगात्-[ विक्रमी ]

अर्थ-अत्यन्त शौर्य-नाम पराक्रमवाले.

७७ धनुरस्यास्तीति-[ धन्वी ]

अर्थ-धनुष्यको धारणकरनेवाले. (प्र० ) "रामःशस्त्रभृतामहम्"

७८ मेधा बहुग्रन्थधारणसामर्थ्यं सा यस्या-
स्तीति-[ मेधावी ]

अर्थ-समस्त शास्त्रोंकूं धारणकरनेवाली बुद्धीको रखनेवाले.

७९ विक्रमते जगद्विश्वं तेन विना गरुडेन पक्षिणा
क्रामत्वात् वेति-[ विक्रमः ]

अर्थ-तीनोंलोकमें अपने चरणको फैलावनेवाले अर्थात् विराट्स्वरूप १ गरुडपर स्थितहोकर चलनेवाले २

८० क्रमणात् क्रमहेतुत्वात् विक्रमो विष्णुरिति
मनुवचनात्-[ क्रमः ]

अर्थ-जो सबमें आपही चलें १ प्राणियोंके चलावनेवाले २

८१ अविद्यमानः उत्तमो यस्येति-[ अनुत्तमः ]

अर्थ-जिससें इतर कोईभी उत्तम नहीं. ( प्र० ) "यस्मात्परं नापरमस्ति किंचित्" "नत्वत्समोस्त्यभ्यधिकः कुतोन्यः" इति श्रुतिस्मृती ।

८१ दैत्यादिभिर्धर्षयितुं न शक्यते इति-[ दुराधर्षः ]

अर्थ-दैत्यादिकोंनें निग्रहकरनेमें जो अशक्य.

८२ प्राणिनां पुण्यापुण्यात्मकं कर्म कृतं जानाति पत्रपुष्पाद्यल्पमपि प्रयच्छतां मोक्षं ददातीति वा-[कृतज्ञः]

अर्थ-सब जीवोंके शुभ-अशुभ कर्म जाननेवाले १ फल, मूल, पत्र पुष्पादिक अर्पण करनेवालोंके अर्थ मुक्तिफल देनेवाले २

८३ पुरुषप्रयत्नः क्रिया च हिंसा वा सर्वात्मकत्वात् तदाधारतया वालक्ष्यते इति-[ ः]

अर्थ-समस्तोंके पुरुषार्थ रूप १ पुरुषोंके क्रियारूप २ पुरुषोंको कृपामें जो प्रेरक समझेजाय कारण सबके आधाररूपहोनेसें ३

८४ स्वमहिमप्रतिष्ठितत्वात्-[आत्मवान्]

अर्थ-अपनी महिमाकेविषे सदा स्थित रहनेवाले. (प्र०) "स भगवतः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि" इति श्रुतिः।

सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः॥ अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः॥ १०॥ ॥

८५ सुराणां देवानां शोभनदातृणां वा ईशः-[सुरेशः]

अर्थ-देवतोंके तथा शोभन देनेवालोंके ईश नाम स्वामी.

८६ आर्तानामार्तिहरणत्वात्-[शरणम्]

अर्थ-पीडित जनोंके दुःख हरनेवाले.

८७ परमानन्दरूपत्वात्-[शर्म]

अर्थ-परम आनंद स्वरूप.

८८ विश्वस्य कारणत्वात्-[ विश्वरेताः ]

अर्थ-जगत्के कारण नाम उपादान कारण.

८९ सर्वाः प्रजाः यत्सकाशादुद्भवन्तीति स-[ प्रजाभवः ]

अर्थ-समस्त प्रजाके उत्पत्ति करनेवाले.

९० प्रकाशरूपत्वात्-[ अहः ]

अर्थ-प्रकाशरूप दिनकी नाईं.

९१ कालात्मना स्थितो विष्णुः-[ संवत्सरः ]

अर्थ-कालस्वरूपसें स्थित विष्णु भगवान्.

९२ व्यालवत् ग्रहीतुमशक्यत्वात्-[ व्यालः ]

अर्थ-सर्पकी नाईं ग्रहण करनेमें अशक्य अर्थात् पकडनेमें नहीं आवे.

९३ प्रतीतिः प्रज्ञा-[ प्रत्ययः ]

अर्थ-प्रतीतिरूप अर्थात् ज्ञानस्वरूप. ( श्रु० ) "प्रज्ञानंब्रह्म" इति श्रुतिः ।

९४ सर्वसाक्षित्वात्-[ सर्वदर्शनः ]

अर्थ-समस्तजनोंके साक्षी अर्थात् आत्मरूप होकर स्वयं (आप) देखनेवाले.

**अजः सर्वेश्वरः सिद्धिः सिद्धिः सर्वादिरच्युतः ॥ वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥ ११ ॥**

### ९५ न जायत इति-[अजः]

अर्थ-जीवोंकी नाईं जिनका जन्म नहीं. अर्थात् विलक्षण जन्म-वाले. (प्र०) "न जातो न जनिष्यत" इति श्रुतेः "नहि जातो न जायेहं न जनिष्ये कदाचन। क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः" महाभारते.

### ९६ सर्वेषामीश्वरः-[सर्वेश्वरः].

अर्थ-संपूर्णोंके.जो ईश्वर वही ब्रह्मादिक तिनकेभी ईश्वर.(प्र०) "एष सर्वेश्वरः" इति श्रुतिः।

### ९७ निष्पन्नरूपत्वात्-[सिद्धः]

अर्थ-स्वयंसिद्ध अर्थात् सदा एकरूपसें रहनेवाले

### ९८ सर्ववस्तुषु संविद्रूपत्वात् निरतिशयरूपत्वात् फलरूपत्वाद्वा-[सिद्धिः]

अर्थ-संपूर्ण वस्तुओंमें चिद्रूप १ समस्तसें उत्तमफलरूप कारण स्वर्गादिक नाशवान्हैं परमेश्वरकी प्राप्ति अविनाशीहै २

### ९९ सर्वभूतानामादिकारणत्वात्-[सर्वादिः].

अर्थ-समस्तभूतोंके आदिकारण.

### १०० स्वरूपसामर्थ्येन न च्यवते न च व्यवशिष्यते इति-[अच्युतः]

अर्थ-जो अपने सामर्थ्यसें च्युत नहीं अर्थात् जिनका सामर्थ्य कालत्रयमें नाश नहीं होवे. (प्र०) "शाश्वतं शिवमच्युतम्" इति गी० "यस्मान्नच्युतः सर्वोहमच्युतस्तेनकर्मणेति"

श्रीविष्णुसहस्रनाम-चन्द्रिकायां भाषाटीकायां प्रथमं शतकं समाप्तम्।

श्रीः ।

# विष्णुसहस्रनामचन्द्रिकायां

## (भाषाटीकायां)

## द्वितीयशतकप्रारम्भः ।

१०१ वर्षणात् सर्वकामानां धर्मो वृषः कात् तोयात् भूमिमपादिति कपिर्वराहः वृषत्वात् कपित्वाच्च–[वृषाकपिः]

अर्थ–वृषनाम धर्म जो सबके मनको वर्षावे अर्थात् पूरणकरे १ कनाम जल जो पृथ्वीकी रक्षा जलसें करे जिस्सें कपि अर्थात् वराहभगवान् उक्त दोनोंपदसें वृषाकपि एकनाम भया. तिसका यह अर्थहै कि धर्मरूप वराहरूप. (प्र०) "कपिर्वराहःश्रेष्ठश्च धर्मश्च वृष उच्यते । तस्मात् वृषाकपिं प्राह काश्यपोमां प्रजापतिः" इति महाभारते.

१०२ इयानिति मातुं परिच्छेतुं न शक्यत आत्मेति–[अमेयात्मा]

अर्थ–जिसके स्वरूपका कोईभी पुरुष प्रमाण न करसके कि ऐसाहै.

१०३ सर्वसंबन्धविनिर्गतः नानाशास्त्रोक्ताद्योगादपगतो वा–[सर्वयोगविनिःसृतः]

अर्थ–समस्तसंबन्धसें रहित १ निखिल (संपूर्ण) शास्त्रमें कहा हुवा जो योगहैं उससे दूरभूत २ (प्र०) "असङ्गोह्ययं पुरुषः" इति श्रुतिः ।

वसुर्वसुमनाः सत्यः समात्मा स-
सम्मः॥ अमोघः पुण्डरीकाक्षो
वृषकर्मा वृषाकृतिः॥ १२॥ ॥

१०४ वसन्ति सर्वभूतान्यत्र तेष्वयमपि वसति वसूनामस्मि पावक इत्युक्तो वा-[वसुः]

अर्थ- जिसमें सब प्राणी निवासकरैं १ सब प्राणियोंके विषे रहनेवाले २ आठों वसुओंमें पावक नाम वसु ३.

१०५ वसुशब्देन धनवाचिना प्राशस्त्यं लक्ष्यते। प्रशस्तं मनोयस्य सः-[वसुमनाः]

अर्थ-उत्तम मन जिनका अर्थात् रागद्वेषादिक क्लेशसे मान-मद-मोहादिकसें रहित ऐसा जिसका मन होय सो वसुमनाः।

१०६ अवितथरूपत्वात् मूर्तामूर्तात्मकत्वाद्वा सदिति प्राणः तित्यन्नं यमिति दिवाकरः तेनप्राणान्नादित्यरूपत्वाद्वा-[सत्यः]

अर्थ-सत्यरूप तीनों कालमें अबाधित१ मूर्तिमान् और अमूर्तिमान् अर्थात् साकार-निराकार २ सत्-नाम प्राण, तनाम अन्न, य-नामसूर्य, प्राणरूप सूर्यरूप अन्नरूपहै ३

१०७ समे आत्मनो यस्य रागद्वेषादिभिरदूषितः स सर्वभूतेषु समः एकः आत्मा वा-[समात्मा]

अर्थ-रागद्वेषादिकोंसें रहित समानहै १ वा निखिल (संपूर्ण भूतोंमें एकहीहै आत्मा जिनका २

१०८ सर्वैरप्यर्थजातैः परिच्छिन्नोमितः सर्वैरप-

रिच्छिन्नोऽमितः इति वा–[ संमितः–असंमितः ]

अर्थ–अखिल ( संपूर्ण ) पदार्थोंसे मित नाम प्रमाण किये गये १ असंमित किसीही पदार्थोंसे जिनका प्रमाण नहींहोसकता २

१०९ सर्वकालेषु सर्वविकाररहितत्वात् मया ल-क्ष्म्या सहितः वर्तत इति वा–[ समः ]

अर्थ–सर्व कालमें संपूर्ण विकारसें रहित १ मानाम लक्ष्मीजी करके सहित २

११०·पूजितः स्तुतः संस्मृतो वा सर्वफलं ददाति न वृथा करोतीति–[ अमोघः ]

अर्थ–पूजा, तथास्तुतिस्मरण इन्होंके गोचर हुयेहुवे संपूर्ण फ-लोंको देनेवाले.

१११ हृदयस्थं पुण्डरीकमश्नुते व्याप्नोति तत्रो-पलक्षित इति पुण्डरीकाकारे उभे अक्षि-णी यस्येति वा–[ पुण्डरीकाक्षः ]

अर्थ–योगियोंके हृदयरूपी कमलमें व्याप्त अर्थात् रहनेवाले १ कमलके समान नेत्रवाले २. (प्र० ) "हृत्पुण्डरीकपुरमध्यसंस्थ-म् " इति श्रुतिः ।

११२ धर्मलक्षणं कर्म अस्येति–[ वृषकर्मा ]

अर्थ–धर्मयुक्तहै कर्म जिनका.

११३ धर्मार्थमाकृतिर्यस्येति–[ वृषाकृतिः ]

अर्थ–धर्मकेलियेहै आकृति अर्थात् अवतार लेना जिनका. ( प्र० ) "धर्मसंस्थापनार्थाय संभवामि युगेयुगे " गी० ।

रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः॥ अमृतः शाश्वतस्थाणुर्वरारोहो महातपाः ॥ १३ ॥ ॥

११४ संहारकाले प्रजाः संहरन् रोदयतीति रुदं राति ददातीति वा रुद्दुःखं कारणं वा द्रावयतीति वा-[रुद्रः]

अर्थ-संहारसमयमें प्रजाको रुदनकरावनेवाले १ रुदननाम दुःख जो दुष्टोंको दुःख दे सो रुद्र २ रुदनाम दुःख अथवा दुःखका कारण इन्होंको जो द्रवावे नाम नाशकरें सो रुद्र ३ (प्र०) "रुद्दुःखं दुःखहेतुं वा विद्रावयति यः प्रभुः। रुद्र इत्युच्यते तस्मात् शिवः परमकारणम्" लिङ्गपुराणे.

११५ बहूनि शिरांसि यस्येति-[बहुशिराः]

अर्थ-अनन्त शिरवाले. (प्र०) "सहस्रशीर्षा" इति श्रुतिः।

११६ बिभर्ति लोकानिति-[बभ्रुः]

अर्थ-संपूर्ण लोकके धारण तथा पालन करनेवाले.

११७ विश्वस्य कारणत्वात्-[विश्वयोनिः]

अर्थ-जगत्के कारण.

११८ शुचीनि श्रेयांसि नामानि श्रवणीयानि अस्येति-[शुचिश्रवाः]

अर्थ-पवित्रहैं जिनका नाम यश.

११९ न विद्यते मृतं मरणं यस्येति-[अमृतः]

अर्थ–मरणरहित. ( प्र० ) "अजरोमर" इति श्रुतिः।

१२० शाश्वतश्चासौ स्थाणुश्चेति–[ शाश्वतस्थाणुः ]

अर्थ–जो निरन्तर स्थिर ( शान्त. )

१२१ वरः आरोहोऽङ्कोस्येति. वरमारोहणं य-
स्मिन्निति वा आरूढानां पुनरावृत्त्य-
संभवात्–[ वरारोहः ]

अर्थ–उत्तमहै आरोह नाम अंक जिनका अर्थात् श्रेष्ठशय्यावाले १ जिसपदको प्राप्तहोकरके पुनरावृत्ति नहीं होय २ ( प्र० ) "नसपुनरावर्तते" "यं प्राप्य न निवर्तन्ते" इति श्रुति-स्मृती।

१२२ महत् सृज्यविषयं तपोज्ञानमस्येति वा–
[ महातपाः ]

अर्थ–समस्त सृष्टिके पूर्णज्ञानवाले. १ बडे ऐश्वर्य प्रतापवाले.

सर्वगः सर्वविद्भानुर्विष्वक्सेनो ज-
नार्दनः॥ वेदो वेदविदव्यङ्गो वेदाङ्गो
वेदवित्कविः॥ १४॥

१२३ सर्वं गच्छतीति–[ सर्वगः ]

अर्थ–जो सर्वत्र कारणरूप होके व्याप्तहै.

१२४ सर्वत्र सर्वं वेत्ति विन्दतीति वा–सर्ववित् भातीति
भानुः सर्वविच्चासौ भानुश्च–[ सर्वविद्भानुः ]

अर्थ–जो प्रकाशमानहै जो सबको जाननेवालाहैं सो यह सर्वविद्भानु दोनोपद मिकलर एकनामहै.

१२५ विश्वमञ्चन्ति पलायन्ते दैत्यसेना यस्य रणोद्योगमात्रेणेति-[ विष्वक्सेनः ]

अर्थ-जिनकी स्वल्पक्रियासें दैत्योंकी सेना विष्वक्नाम चारों-तरफ भागजाय.

१२६ जनानर्दयति हिनस्ति नरकादीन् गमयतीति वा जनैः पुरुषार्थमभ्युदयनिःश्रेयसलक्षणं याच्यते इति वा-[ जनार्दनः ]

अर्थ-दुष्टजनोंको मारनेवाले १ दुष्टजनोंको नरकमें प्रवेशकरनेवाले २ भक्तलोगोंकी याचनाके गोचर ३

१२७ वेदयतीति-[ वेदः ]

अर्थ-अपने मार्गको ज्ञानसें बोधन करावनेवाले अर्थात् जनानेवाले. (प्र०) "तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" इति गीता।

१२८ वेदे विद्यते इति-[ वेदवित् ]

अर्थ-वेदकेविषे विद्यमान.

१२९ अव्यङ्गज्ञानादिभिः परिपूर्णो विकलः इत्युक्त व्यङ्गो व्यक्तिर्न विद्यते इति वा-[ अव्यङ्गः ]

अर्थ-अव्यंग ज्ञानादिकों करके परिपूर्ण १ व्यक्तिरहित अर्थात् अव्यक्त स्वरूप २ (प्र०) "अव्यक्तोयम्" इति भगवद्वचनम्।

१३० वेदा अङ्गभूता यस्य सः-[ वेदाङ्गः ]

अर्थ-अगंभूतहैं वेद जिसकें अर्थात् जिसके अंगसें वेद उत्प-

१३१ वेदान् विचारयति इति-[वेदवित्]

अर्थ-वेदका यथार्थ विचार करनेवाले.

१३२ क्रान्तदर्शी-[कविः]

अर्थ-सर्वदृक् अर्थात् जो वस्तु इन्द्रियोंसें प्रत्यक्ष नहींहोवे उसकोभी देखनेवाले. (प्र०) "नान्यदतोस्तिद्रष्टा" इत्यादि श्रुतिः।

**लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ॥ चतुरात्माचतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ १५॥ ॥**

१३३ लोकानध्यक्षयति सर्वेषां लोकानां प्राधान्येनोपद्रष्टा इति-[लोकाध्यक्षः]

अर्थ-सब लोगोंको प्राधान्यसे द्रष्टा.

१३४ लोकपालानां सुराणामध्यक्षः-[सुराध्यक्षः]

अर्थ-लोकपाल जो देवता तिनके स्वामी.

१३५ धर्माधर्मौ साक्षादीक्षते अनुरूपं फलं दातुं तस्मात्-[धर्माध्यक्षः]

अर्थ-धर्म तथा अधर्मको साक्षात् देखनेवाले वैसेही धर्म्म अधर्म्मके अनुरूप फल देनेवाले.

१३६ कृतश्च कार्यरूपेण अकृतश्च कारणरूपेणेति-[कृताकृतः]

अर्थ-कृतनाम कार्यरूप अकृतनाम अकारणरूप.

१३७ सर्गादिषु पृथग्विभूतयश्चतस्रः सन्ति यस्येति-[ चतुरात्मा ]

अर्थ-सर्ग आदिकेविषे पृथक् पृथक् चारहैं विभूति जिनकी. यथा सृष्टिकालमें ब्रह्मा १ दक्षादि प्रजापति २ काल ३ समस्त जीव ४ और पालनकालमें विष्णु १ मन्वादिक २ काल ३ समस्त भूत ४ संहारकालमें. रुद्र १ मृत्यु २ काल ३ निखिलभूत ४ (प्र०) "ब्रह्मदक्षादयः कालस्तथैवाखिलजन्तवः। विभूतयो हरेरेता जगतः सृष्टिहेतवः॥ १॥ विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज। स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः॥ २॥ रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः। चतुर्धा प्रलयायैते जनार्दनविभूतयः" ॥ ३॥ इति विष्णुपुराणम्।

१३८ व्यूह्यात्मानं चतुर्धा वै वासुदेवादिमूर्तिभिः।
सृष्ट्यादीन् प्रकरोत्येषः विश्रुतात्माजनार्दनः॥
इति व्यासवचनात्-[ चतुर्व्यूहः ]

अर्थ-वासुदेव १ संकर्षण २ प्रद्युम्न ३ अनिरुद्ध ४ ये चारमूर्ति करके अपने आत्माकी व्यूहनाम रचना विशेषकरके सृष्टि आदिकोंकूं करनेवाले.

१३९ दंष्ट्राश्चतस्रो यस्येति यद्वा शृङ्गंदंष्ट्रेत्युच्यते-चत्वारि शृङ्गेति श्रुतेः इति-[ चतुर्दंष्ट्रः ]

अर्थ-नृसिंहरूप अर्थात् चारहै डाढै जिनके १ चार शृंगवाले वराह भगवान् २

१४० चत्वारो भुजा यस्येति-[ चतुर्भुजः ]

अर्थ-चार भुजावाले.

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्ज-
गदादिज ॥ अनघो विजयो जेता
विश्वयोनिः पुनर्वसुः ॥ १६ ॥ ॥

१४१ प्रकाशैकरसत्वात्–[ भ्राजिष्णुः ]

अर्थ–सदा प्रकाशस्वरूप.

१४२ भोज्यरूपतया प्रकृतिर्माया–[ भोजनम् ]

अर्थ–भोज्यरूप जो माया सो जिसका भोजन.

१४३ पुरुषरूपेण तां भुनक्तीति–[ भोक्ता ]

अर्थ–पुरुषरूपसें मायाको भोगनेवाले.

१४४ हिरण्याक्षादीन् सहते अभिभवतीति–
[ सहिष्णुः ]

अर्थ–हिरण्याक्ष आदि असुरोंका तिरस्कार करनेवाले.

१४५ हिरण्यगर्भरूपेण जगदादावुत्पद्यते स्व-
यमिति–[ जगदादिजः ]

अर्थ–हिरण्यगर्भरूपसें समस्तप्रपंचके आदिमें प्रकट होनेवाले.

१४६ अघं न विद्यते यस्येति–[ अनघः ]

अर्थ–अघ नाम पाप तिससें रहित. ( प्र० ) "अपहतपाप्मा" इति श्रुतिः ।

१४७ विजयते ज्ञानवैराग्यैश्वर्यादिभिर्गुणैः
विश्वमिति–[ विजयः ]

अर्थ-ज्ञानवैराग्यादिक गुणोंसे जगत्को जीतनेवाले.

१४८ यतोऽतिशेते सर्वभूतानि स्वभावतः
इति-[जेता]

अर्थ-स्वभावकरके सब भूतोंको उत्तम प्रकारसें जीतनेवाले.

१४९ विश्वश्चासौ योनिश्च-[विश्वयोनिः]

अर्थ-विश्वरूपसें कार्यरूप और योनिरूपसें कारणरूप.

१५० पुनः पुनः शरीरेषु वसति क्षेत्रज्ञरूपेणेति-
[पुनर्वसुः]

अर्थ-वारंवार जीवरूप होके शरीरोंकेविषे. निवास करनेवाले.

**उपेन्द्रो वामनः प्रांशुरमोघः शुचि-
रूर्जितः ॥ अतीन्द्रः संग्रहः सर्गो
धृतात्मा नियमो यमः ॥ १७॥ ॥**

१५१ इन्द्रमुपगतोनुजत्वेनेति यद्वा उपरि इ-
न्द्रः इति-[उपेन्द्रः]

अर्थ-इन्द्रके अनुज नाम छोटेभाई, उपरि नाम गोलोकके इन्द्र नाम स्वामी. (प्र० ) "ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः। उपेन्द्र इति कृष्ण त्वां गास्यन्ति भुवि देवताः" इति हरिवंशपुराणे।

१५२ बलिं वामनरूपेण याचितवान् संभजनी-
य इति वा-[वामनः]

अर्थ-वामनरूप अवतार लेकर राजाबलीसें तीनपग परिमित पृथ्वीकी याचना करनेवाले १ जिनकाभजन समस्त देवता

करै २ (प्र० ) "मध्ये वामनमासीनं विश्वेदेवा उपासते " इति मन्त्रवर्णात् ।

### १५३ स एव जगत्त्रयं क्रममाणः प्रांशुरभूदिति-[ प्रांशुः ]

अर्थ-तीनोंलोकको उल्लंघनकरते हुये अत्यन्त विस्तृतरूप धारणकरनेवाले. (प्र०) "तोये तु पतितेहस्ते वामनोभूदथ वामनः सर्वदेवमयं रूपं दर्शयामास वै प्रभुः ॥ भूपादौ द्यौः शिरश्चास्य चन्द्रादित्यौ च चक्षुषी " ( इत्यादिना विश्वरूपं दर्शयित्वा ) "तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे । नभः प्रक्रममाणस्य नाभ्यां तौसमवस्थितौ ॥ दिवमाक्रममाणस्य जानुमूले व्यवस्थितौ " इति हरिवंशे ।

### १५४ न मोघं चेष्टितं यस्य सः-[ अमोघः ]

अर्थ-नहींहै व्यर्थ व्यापार जिनका.

### १५५ स्मरतां स्तुवतामर्चयतां पावनत्वात्-[ शुचिः ]

अर्थ-स्मरण-पूजा-स्तुति-करनेवाले पुरुषोंको पावन नाम पवित्र करनेवाले. ( प्र० ) "अस्य स्पर्शश्च महान् शुचिः " इति मन्त्रवर्णवचनम् ।

### १५६ बलप्रकर्षशालित्वात्-[ ऊर्जितः ]

अर्थ-अत्यन्त बलवाले.

### १५७ अतीत्येन्द्रं स्थितो ज्ञानैश्वर्यादिभिः स्वभावसिद्धैरिति-[ अतीन्द्रः ]

अर्थ-स्वाभाविक ज्ञान-वैराग्य-ऐश्वर्यादिकोंसें इन्द्रको उल्लंघनकरनेवाले.

१५८ सर्वेषां प्रतिसंहारात्-[ संग्रहः ]

अर्थ-संहारकालमें सबोंको एकत्र करनेवाले. अर्थात् बटोर (इकट्ठा) लेनेवाले.

१५९ सृज्यरूपतया सर्गहेतुत्वाद्वा-[ सर्गः ]

अर्थ-सृष्टीरूप १ सृष्टीके कारण २

१६० ऐकरूप्येण जन्मादिरहिततया धृतः आत्मा येन सः-[ धृतात्मा ]

अर्थ-एकरूपसें स्थिरहै आत्मा नाम स्वरूप जिनका.

१६१ स्वेषु स्वेष्वधिकारेषु प्रजा नियमयति इति-[ नियमः ]

अर्थ-अपने २ अधिकारमें संपूर्ण प्रजाको लगानेवाले.

१६२ अन्तर्यच्छतीति-[ यमः ]

अर्थ-सबोंके हृदयमें बैठकर सबको अपने २ कार्यमें लगानेवाले.

**वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ॥ अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ १८ ॥ ॥**

१६३ निःश्रेयसार्थिभिः वेदनार्हत्वात्-[ वेद्यः ]

अर्थ-मोक्षार्थियोंको जानने योग्य.

१६४ विद्यानां वेदितृत्वात्-[ वैद्यः ]

अर्थ–वेद आदि सब विद्याओंको जाननेवाले.

१६५ सदाविर्भूतस्वरूपत्वात्–[ सदायोगी ]

अर्थ–सदा ( निरंतर ) आविर्भूतहै स्वरूप जिनका.

१६६ धर्मत्राणाय वीरान् असुरभटान् हन्तीति–[ वीरहा ]

अर्थ–धर्ममर्यादाके नाशक जो असुर वीर तिनके हंता नाम शिक्षा देनेहारे.

१६७ माया विद्याया पतिरिति–[ माधवः ]

अर्थ–मा नाम विद्या तिसके पति नाम स्वामी. (प्र०) "मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् । तस्मान्माधवनामासीद्धवः स्वामीति शब्दितः "

१६८ यथामधु परां प्रीतिमुत्पादयति तथा अयमपीति–[ मधुः ]

अर्थ–जैसे मधु नाम अमृत अत्यन्त प्रीतिको उत्पन्न करताहै तैसे यह भगवान्‌भी उत्कृष्टप्रीति नाम आनन्दको देनेवाले.

१६९ शब्दादिरहितत्वादिन्द्रियाणामविषयः–[ अतीन्द्रियः ]

अर्थ–इन्द्रियातीत अर्थात् जहाँ इंद्रियोंकी गमनकरनेकी शं- क्ति हैनहीं.

१७० मायाविनामपि मायाकारित्वात्–[ महामायः ]

अर्थ–समस्तमायावालोंके बडेमायावी. ( प्र० ) "मम माया- दुरत्यया "इति गीता ।

१७१ जगदुत्पत्तिस्थितिलयार्थमुद्युक्तत्वात्-
[महोत्साहः]

अर्थ-समस्त जगत्की उत्पत्ति-स्थिति-लयकरनेमें अत्यन्त उत्साहवाले.

१७२ बलिनामपि बलत्त्वात्-[महाबलः

अर्थ-बलवानोंसेंही अन्यन्त बलवाले.

**महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः। अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥ १९॥**

१७३ बुद्धिमतामपि बुद्धिमत्वात्-[महाबुद्धिः]

अर्थ-बुद्धिमानोंमेंभी अत्यन्त उत्कृष्ट बुद्धिवाले.

१७४ महदुत्पत्तिकारणमविद्यालक्षणवीर्यमस्येति-[महावीर्यः]

अर्थ-उत्पत्तिका कारण महत् नाम बडाहै अविद्यालक्षण वीर्य नाम बडा पराक्रम जिसका.

१७५ महती शक्तिः सामर्थ्यमस्येति-[महाशक्तिः]

अर्थ-अत्यन्त उत्कृष्ट शक्तिवाले.

१७६ महती द्युतिर्बाह्याभ्यन्तरा वा अस्येति-
[महाद्युतिः]

अर्थ-बडीहै बाह्य नाम बाहर तथा आभ्यन्तरनाम भीतर द्युति नाम कान्ति जिनकी. (प्र०) "स्वयं ज्योतिश्च" इति श्रुतिः।

१७७ इदं तदिति निर्दिष्टं यन्न शक्यते परस्मै असंवेद्यत्वात् तत् अनिर्देश्यं वपुरस्येति-[ अनिर्देश्यवपुः ]

अर्थ-जिनका शरीर ऐसा कहनेकूं योग्य नहीं है कि ऐसाहै.

१७८ ऐश्वर्यलक्षणा समग्रा, श्रीर्यस्य स-[ श्रीमान् ]

अर्थ-ऐश्वर्यरूप लक्ष्मीवाले.

१७९ सर्वैः प्राणिभिः अमेया बुद्धिः आत्मा यस्य स-[ अमेयात्मा ]

अर्थ-संपूर्ण प्राणियोंमें अनगिनीहै बुद्धि जिनकी अर्थात् जिनकी बुद्धि प्रमाणसें बाहरहै.

१८० महान्तमद्रिं मन्दरं गोवर्द्धनं वा अमृतमथने गोरक्षणे च धृतवान् इति-[ महाद्रिधृक् ]

अर्थ-अमृत मथनके समयमें मन्दराचलपर्वतको धारण करनेवाले १ गौरक्षणके समयमें गोवर्द्धनपर्वतको केवल एकही अँगूरीपर धारणकरनेवाले २

**महेष्वासो महीभर्ता श्रीनिवासः सतांगतिः ॥ अनिरुद्धः सुरानन्दो गोविन्दो गोविदांपतिः ॥ २० ॥**

१८१ महानिष्वासः इषुक्षेपो यस्य सः-[ महेष्वासः ]

अर्थ-बडाभारीहै धनुष जिनका.

१८२ एकार्णवां प्लुतां महीं च बभारेति-[ महीभर्ता ]

अर्थ—समुद्रमें प्लुत नाम डूबीहुई पृथ्वीको धारण करनेवाले.

१८३ यस्य वक्षस्यनपायिनी श्रीर्वसति
इति-[श्रीनिवासः]

अर्थ— जिनके वक्षस्थलमें निरंतर लक्ष्मीजी निवास करतीहै.

१८४ सतां वैदिकानां पुरुषार्थसाधनहेतुः-
[सतांगतिः]

अर्थ—वैदिक पुरुषोंको अर्थात् साधुजनोंको मोक्ष देनेवाले.

१८५ न केनापि प्रादुर्भावेषु निरुद्धः इति-[अनिरुद्धः]

अर्थ—जिनका कोईभी शत्रुजन रोक न सकै.

१८६ सुरान् आनन्दयतीति-[सुरानन्दः]

अर्थ—देवतोंको आनन्द देनेवाले.

१८७ नष्टां वै धरणीं पूर्वामविदं वै गुहागतां। गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः॥ इति मोक्षधर्मवचनात-गोविन्दः अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः। गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वताम्॥ गौरेषा तु तथा वाणी तां च विन्दयते भवान्। गोविन्दस्तु ततो देव मुनिभिः कथ्यते भवान्॥ इति हरिवंशपुराणात्-[गोविन्दः]

अर्थ—वराहरूपसें पृथ्वीको धारण करनेवाले १ समस्त गौवाके इन्द्र नाम स्वामी २ गो नाम वेदरूप वाणी तिसको प्राप्त करावनेवाले ३

अर्थ–संसारचक्रको भलेप्रकारसें घुमानेवाले.

७७५ सर्वत्र वर्तमानत्वान्न निवृत्तः आत्मा कुतोपीति–[ अनिवृत्तात्मा ]

अर्थ–सर्वत्र व्याप्तहोनेसें जिसका आत्मा किसीसेंभी पृथक् नहीं.

७७६ ज़ेतुं न शक्यते इति–[ दुर्जयः ]

अर्थ–किसीसेभी जीते नहींजाय.

७७७ भयहेतुत्वादस्याज्ञां नातिक्रमन्तीति–[ दुरतिक्रमः ]

अर्थ–जिसके भयसें जिनकी आज्ञाको कोईपुरुषभी उल्लंघन नहींकरते अर्थात् जिनके भयसें अग्नि तथा सूर्य तापकरताहै और जिनके भयसें वायु, इन्द्र, मृत्यु, दौडतेहैं. (प्र० ) "भयादस्याग्निस्तपति भयात्तपति सूर्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" इति मन्त्रवर्णात् ।

७७८ दुर्लभया भक्त्या लभ्यत्वात्–[ दुर्लभः ]

अर्थ–दुर्लभभक्तिसें प्राप्य. ( प्र० ) "भक्त्या लभ्यस्त्वनन्यया" इति गीता ।

७७९ दुःखेन गम्यते ज्ञायते इति–[ दुर्गमः ]

अर्थ–दुःखपूर्वकज्ञानके गोचर.

७८० दुःखादवाप्य इति–[ दुर्गः ]

अर्थ–दुःखसें प्राप्य.

७८१ दुःखेनास्यते चित्ते योगिभिः समाधाविति–[ दुरावासः ]

अर्थ–समाधिमें योगीजनोंने बडे परिश्रमसें अपने चित्तमें जो

स्थापितकिये जाय अर्थात् योगियोंके हृदयमें बडे दुःखसें समाधिसें निवास करनेवाले.

७८२ दुर्गामिनो दानवादयस्तान् हन्तीति–[दुरारिहा]

अर्थ–दानवोंको मारनेवाले.

**शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः॥ इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः॥ ८४॥**

७८३ शोभनैरङ्गैर्ध्येयत्वात्–[शुभाङ्गः]

अर्थ–सुन्दरअंगोंसें ध्यानके योग्य.

७८४ लोकानां सारं यत् तद्गृह्णाति लोकसारः प्रणवः तेन प्रतिपत्तव्य इति वा–[लोकसारङ्गः]

अर्थ–लोकमें जो सार तिसकूं ग्रहणकरनेवाले १ प्रणवकरके जाननेकूं योग्य २

७८५ शोभनस्तन्तुः विस्तीर्णः प्रपञ्चोस्येति–[सुतन्तुः]

अर्थ–सुन्दरहै प्रपंचका विस्तार जिनका.

७८६ तमेव वर्धयति छेदयतीति–[तन्तुवर्धनः]

अर्थ–संसाररूपतन्तुको छेदनकरनेवाले.

७८७ इन्द्रस्य कर्मैव कर्मास्येति–[इन्द्रकर्मा]

अर्थ–इन्द्रका जो कर्महै सोहीहै कर्म जिनका.

७८८ महान्ति वेदादीनि भूतानि कर्माणि का-
र्याण्यस्येति-[ महाकर्मा ]

अर्थ-आकाशादिक पञ्चभूतोंके कर्ता.

७८९ कृतमेव न कर्तव्यं किंचिदपि कर्मास्य
विद्यते इति-[ कृतकर्मा ]

अर्थ-जिनको कुछ कर्तव्य नहीं अर्थात् सब कर्म कियाहीहै.

७९० कृतः वेदात्मकः आगमो येन इति-[ कृतागमः ]

अर्थ-वेदके कर्ता.

**उद्भवः सुन्दरः सुन्दो रत्ननाभः सु-
लोचनः ॥ अर्को वाजसनः शृङ्गी
जयन्तः सर्वविज्जयी ॥ ८५ ॥**

७९१ उत्कृष्टं भवं जन्म स्वेच्छया भजते उद्गतम-
पगतं जन्मास्य सर्वकारणत्वादिति
वा-[ उद्भवः ]

अर्थ-अपनी इच्छासें जन्मलेनेवाले १ समस्तके कारणहोनेसें दूर होगयाहै कर्मायत्तजन्म जिनका २

७९२ विश्वातिशयसौभाग्यशालित्वात्-[ सुन्दरः ]

अर्थ-विश्वको अतिशय नाम उल्लंघनकर वर्तनेवाला जो सौ-भाग्य उससें अतिसुन्दर.

७९३ सुन्दतीति-[ सुन्दः ]

अर्थ—सुन्दशब्द आर्द्रीभावका वाचक है इससे यह अर्थ है कि करुणाकरनेवाले.

७९४ रत्नवत् सुन्दरा नाभिरस्येति-[रत्ननाभः]

अर्थ—रत्नकी तुल्य सुन्दरहै नाभि (सूंढी) जिनकी.

७९५ शोभनं लोचनं नयनं ज्ञानं वा अस्येति-[सुलोचनः].

अर्थ—सुन्दरहै लोचन नाम नयन अथवा ज्ञानं जिनका.

७९६ ब्रह्मादिभिः पूज्यतमैरर्चनीयत्वात्-[अर्कः]

अर्थ—ब्रह्मादिकोंने पूजनीय.

७९७ वाजमन्नमार्थिनां सनोति ददातीति-[वाजसनः]

अर्थ—अर्थीजनोंको अन्नदेनेवाले.

७९८ प्रलयाम्भसि शृङ्गवान् मत्स्यविशेषरूपः-[शृङ्गी]

अर्थ—प्रलयमें मत्स्यरूपहोकर शृंग-धारणकरनेवाले.

७९९ अरीन् अतिशयेन जयतीति-[जयन्तः]

अर्थ—शत्रुओंको अतिशयकरके जीतनेवाले.

८०० सर्वविषयकज्ञानमस्येति-सर्ववित् आन्तरान् रागादीन् बाह्यान् हिरण्याक्षादींश्च जेतुं शीलमस्येति जयी सर्वविच्चासौ जयी चं-[सर्वविज्जयी]

अर्थ—सर्वविषयकज्ञानवालेहुये भीतरके शत्रुरागादिक बाह्यश-त्रु हिरण्याक्ष आदि असुर इन्होंको जीतनेवाले.

इति श्रीविष्णुसहस्रनामचन्द्रिकायां भाषाटीकायाम् अष्टमशतकं सम्पूर्णम् ।

# विष्णुसहस्रनामचन्द्रिकायां

## (भाषाटीकायां)

## नवमशतकप्रारम्भः ।



सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरे श्वरः ॥ महाह्रदो महागर्तो महाभू-तो महानिधिः ॥ ८६ ॥ ॥

८०१ बिन्दवोऽवयवाः सुवर्णसदृशा अस्येति—[सुवर्णबिन्दुः]

अर्थ—सुवर्णके समानहै अंग जिनका. ( प्र० ) "आप्रणखात् सर्व एव सुवर्णः" इति श्रुतिः ।

८०२ रागद्वेषादिभिः शब्दादिविषयैश्च त्रिदशादिभिश्च न क्षोभ्यते इति—[अक्षोभ्यः]

अर्थ-रागद्वेष आदि तथा शब्दरूप आदि विषय और त्रिदश नाम देवता तिनके अरि नाम शत्रु ये जहाँ क्षोभ नहीं करसकते अर्थात् इन्होंकरके जो क्षोभकूं प्राप्त नहीं.

८०३ सर्वेषां वागीश्वराणां ब्रह्मादीनामपि ईश्वरः-[सर्ववागीश्वरेश्वरः]

अर्थ-ब्रह्मा बृहस्पति आदि जो वाणीके ईश्वर उनकेभी ईश्वर.

८०४ अवगाह्य सदानन्दं विश्रम्य सुखमासते योगिन इति महाह्रद इव-[महाह्रदः]

अर्थ-महाह्रदकीनाई जिस आनन्दस्वरूपका अवगाहनकर योगीजन सुखपूर्वक निवासकरतेहै अर्थात् जिस आनन्दरूपि महाह्रद नाम बडे तालावमें स्नानकरके योगीजन सुखपूर्वक निवास करतेहैं.

८०५ गर्तवदस्य माया महती दुरत्ययेति यद्वा गर्तशब्दो रथपर्याये निरुक्तैरुक्तः तस्मात् महारथ इति-[महागर्तः]

अर्थ-गर्त नाम खड्डा तिसके समान दुरत्ययहै माया जिनकी.१. गर्तशब्द यहाँ रथका वाचक है तब ये अर्थ है कि बडा अर्थ जिनका २ (प्र०) "मम माया दुरत्यया" इति गी० ।

८०६ कालत्रयानवच्छिन्नस्वरूपत्वात्-[महाभूतः]

अर्थ-जिनके स्वरूपका कालत्रयअवच्छेदक नहीं अर्थात् कालत्रयमें परिपूर्णस्वरूप.

८०७ सर्वभूतानि यस्मिन्निधीयन्ते महांश्चासौ निधिश्चेति-[महानिधिः]

अर्थ–सबभूत जिसमें रहें सो कहिये निधि, बडे जो निधि सो कहिये महानिधि.

कुमुदः कुन्दरः कुन्दः पर्जन्यः पवनोऽनिलः ॥ अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥ ८७ ॥ ॥

८०८ कुं धरणीं भारावतरणं कुर्वन् मोदयतीति–[ कुमुदः ]

अर्थ–कु नाम पृथ्वी मुद नाम हर्ष अवतारादिक धारणकर पृथ्वीको आनन्द देनेवाले.

८०९ कुन्दपुष्पतुल्यानि शुद्धानि फलानि राति ददाति लाति आदत्ते इति वा–[ कुन्दरः ]

अर्थ–कुंदपुष्पके समान शुद्धफल देनेवाले १ और ग्रहण करनेवाले २

८१० कुन्दोपमसुन्दराङ्गत्वात् स्वच्छतया स्फटिकनिर्मलः इति–कुं पृथिवीं कश्यपायादादिति वा–[ कुन्दः ]

अर्थ–कुंदपुष्पके समान निर्मल अंगवाले १ कश्यपजीकूं पृथ्वी देनेवाले २ ( प्र० ) " मारीचाय ददौ प्रीतः कश्यपाय वसुन्धराम् " इति हरिवं० ।

८११ पर्जन्यवत् आध्यात्मिकादितापत्रयं शमयति सर्वान् कामान् अभिवर्षतीति–वा–[ पर्जन्यः ]

अर्थ-मेघकीनाईं तीनों तापको दूर करनेवाले १ संपूर्ण कामोंको मेघकीनाईं वृष्टिकरनेवाले.

८१२ स्मृतिमात्रेण पुनातीति-[पवनः]

अर्थ-स्मृतिमात्रसेही सबकूं पवित्र करनेवाले.

८१३ इलति प्रेरणं करोतीति इलः तद्रहितत्वात् इलति स्वपिति इत्यज्ञ इलस्तद्विपरीतः नित्यप्रबुद्धस्वरूपत्वादिति वा-[अनिलः]

अर्थ-जिनका अन्य कोई प्रेरक नाम प्रेरणा करनेवाला नहीं१ इल नाम सोनेवाला अर्थात् अज्ञपुरुषका नामहै तद्भिन्नं अर्थात् नित्यजागरूक २

८१४ स्वात्मामृतमश्नातीति-मथितममृतं सुरान् पाययित्वा स्वयं चाश्नातीति वा-

[अमृताशः]

अर्थ-आत्मारूपीअमृतको प्राशन करनेवाले १ मथित अमृतको देवतोंको पिवायकर स्वयं आप पीनेवाले.

८१५ मृतं मरणं तद्रहितं वपुरस्येति-[अमृतवपुः]

अर्थ-जिनके शरीरको मरण नहीं अर्थात् अजरामर.

८१६ सर्वं जानातीति-[सर्वज्ञः]

अर्थ-संपूर्ण वस्तुओंको जाननेवाले. (प्र०) "यः सर्वज्ञः सर्ववित्" इति श्रुतिः।

८१७-सर्वतोक्षिशिरोमुखमिति भगवद्वचनात्-

[सर्वतोमुखः]

अर्थ—चारोंतरफमेंहै अक्षि, शिर, मुख जिनके.

सुलभः सुव्रतः सिद्धः शत्रुजिच्छ-
त्रुतापनः ॥ न्यग्रोधोदुम्बरोऽश्वत्थ-
श्चाणूरान्ध्रनिषूदनः ॥ ८८ ॥ ॥

८१८ पत्रपुष्पफलादिभिर्भक्तिमात्रसमर्पितैः सुखेन लभ्यते इति–[ सुलभः ]

अर्थ—भक्तिसें अर्पित जो पत्र, पुष्प, फल आदिक तिन्होंकरके सुखपूर्वक प्राप्तहोनेवाले.

८१९ पत्रेषु पुष्पेषु शोभनं व्रतं यस्येति भुङ्क्ते भोजनान्न निवर्तते इति वा–[ सुव्रतः ]

अर्थ—पत्रपुष्पोंकेहीविषे शोभनहै व्रत जिनका १ पत्रपुष्पादिकोंके अनुभवसें जो निवृत्त नहीं होवे.

८२० अनन्याधीनसिद्धित्वात्–[ सिद्धः ]

अर्थ—अन्य किसीके आधीन नहीं है सिद्धि नाम प्राप्ति जिनकी.

८२१ सुरशत्रवः एवास्य शत्रवः तान् जयतीति–[ शत्रुजित् ]

अर्थ—देवतोंके जे शत्रु सोई जिनके वैरी तिनको जीतनेवाले.

८२२ सुरशत्रूणां तापनः–[ शत्रुतापनः ]

अर्थ—देवतोंके शत्रुओंको ताप देनेवाले.

८२३ न्यक् अवाक् रोहति सर्वेषामुपरि वर्तते इति–[ न्यग्रोधः ]

अर्थ–संपूर्णोंसें ऊंचे रहनेवाले.

८२४ अम्बराद्भुद्भवः कारणत्वेनेति यद्वा उदुम्ब-रमन्नाद्यन्तेन तदात्मना विश्वं पोषयन् इति–[ उदुम्बरः ]

अर्थ–सबभूतोंके कारणभूत आकाशसें कारणभावसें उत्पन्न-होनेवाले १ अन्नरूप आत्मासें पालन करनेवाले २ (प्र० ) "ऊ-र्ग्वाअन्नाद्यमुदुम्बरम् ।" इति श्रुतिः ।

८२५ श्वो न स्थातेति–[ अश्वत्थः ]

अर्थ–आगामिदिनहीमें स्थित नहीं है किन्तु सर्वदा स्थितहै.

८२६ चाणूरनामानमान्ध्रं निषूदितवानिति–[ चाणूरान्ध्रनिषूदनः ]

अर्थ–आन्ध्रदेशमें होनेवाला जो चाणूर नाम दैत्य तिसको मारनेवाले.

**सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्त-वाहनः ॥ अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥ ८९ ॥**

८२७ सहस्राणि अनन्तानि अर्चींषि यस्य सः–[ सहस्रार्चिः ]

अर्थ–अनन्तहै अर्चि नाम किरण जिनके अर्थात् हजारसूर्य आकाशमें जो एकवार उदयहोंय तबभी उनकी कान्तिको तुल्य प्रकाश नहीं करसकते ऐसे अपार तेजवाले.

८२८ सप्त जिह्वा अस्य सन्तीति–[ सप्तजिह्वः ]

अर्थ–सातहै काली, कराली आदि जिह्वा जिनके. (प्र०) " काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुचिश्च देवी लेलायमाना इति सप्तजिव्हा " इति श्रुतिः।

८२९ सप्तः एधांसि दीप्तयोऽस्येति–[ सप्तैधाः ]

अर्थ–सातहै एधस नाम दीप्ति जिनकी.

८३० सप्त अश्वा वाहनान्यस्येति सप्तानामेकोऽश्वो वाहनमस्येति वा–[ सप्तवाहनः ]

अर्थ–सात अश्वहै रथके वहनेवाले जिनके १ सातमेंसे एकहीहै वाहन जिनका. २ ( प्र० ) " एकोऽश्वो वहति सप्तनामेति " श्रुतिः ।

८३१ मूर्तिर्घनरूपधारणसमर्थं चराचरलक्षणं तद्रहितः इति–[ अमूर्तिः ]

अर्थ–चराचरसरीखीमूर्तिकरके शून्यहे. ( प्र० ) "ताभ्यः तप्ताभ्यो मूर्तिरजायत " इति श्रुतिः ।

८३२ अघं दुःखं पापं च यस्य न विद्यते इति–[ अनघः ]

अर्थ–दुःख तथा पाप ये जिनके विद्यमाननहीं.

८३३ प्रमात्रादिसाक्षित्वेन सर्वप्रमाणागोचरत्वात्–[ अचिन्त्यः ]

अर्थ–प्रमाता नाम जीव आदिकोंका साक्षीहुवे संपूर्णप्रमाणोंके अगोचर अर्थात् कोईभी प्रमाण उनको नाहिं कहसकता.

८३४ असन्मार्गवर्तिनां भयं करोति भक्तानां भयं कृन्ततीति वा-[भयकृत्]

अर्थ-कुमार्गवर्तिपुरुषोंको भय करनेवाले १ अपने भक्तोंका भय दूरकरनेवाले २

८३५ वर्णाश्रमाचारवतां भयं नाशयतीति-[भयनाशनः]

अर्थ-वर्णआश्रमके आचारवाले पुरुषोंके भयको नाश करने-वाले. (प्र०) "वर्णाश्रमाचारवता पुरुषेण परः पुमान्। विष्णो-राराध्यते पन्था नान्यस्तत्तोषकारकः॥" इति पराशरवचनम्।

**अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान्॥ अधृतःस्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः॥ ९० ॥**

८३६ सौक्ष्मातिशयशालित्वात्-[अणुः]

अर्थ-सूक्ष्मसेंभी सूक्ष्म. (प्र०) "एषोणुरात्मा चेतसा वेदितव्यः" इति श्रुतिः।

८३७ बृहत्त्वात् बृंहणत्वाच्च ब्रह्म-[बृहत्]

अर्थ-सर्वथा अतिमहान् है अर्थात् बडोंसे बडे. (प्र०) "महतो महीयान्" इति श्रुतिः।

८३८ अस्थूलमित्यादिना द्रव्यप्रतिषेधात् कृशः स्थूलः इत्युपचर्यते सर्वात्मत्वात् इति-[कृशः स्थूलः]

अर्थ–अस्थूल इत्यादि श्रुतियोंसे द्रव्यस्वरूप वोनहीं है इसवास्ते गौणसें कृशस्थूल स्वरूपहै.

८३९ सत्वरजस्तमसां सृष्टिस्थितिलयकर्मस्वधिष्ठातृत्वात्–[ गुणभृत् ]

अर्थ–सत्व, रज, तम इन्होंके सृष्टि, स्थिति, लयकरनेमें अधिष्ठाता.

८४० परमार्थतो गुणाभावात्–[ निर्गुणः ]

अर्थ–परमार्थसें गुणरहित. ( प्र० ) "केवलो निर्गुणश्च" इति श्रुतिः ।

८४१ शब्दादिगुणरहितत्वान्निरतिशयसूक्ष्मत्वान्नित्यशुद्धसर्वमतत्वादिप्रतिबन्धकं कर्मजातं तर्कतोपि वक्तुं न शक्यमत एव–[ महान् ]

अर्थ–शब्दादिगुणरहित अत्यन्तसूक्ष्महोनेसें, नित्यशुद्ध सर्व संमतत्व आदिका विघातक जो कर्मसमूह वह जिसमें तर्कसेंभी निरूपणका गोचर नहीं इससें महान्है.

८४२ पृथिव्यादीनां धारकाणामपि धारकत्वात् न केनचित् ध्रियते इति–[ अधृतः ]

अर्थ–धारणकरनेवाले जो पृथ्वीआदि तिन्होंके धारक जिनके पृथिव्यादिक धारक नहीं.

८४३ स्वेनैव आत्मना धार्यते इति–[ स्वधृतः ]

अर्थ–अपना स्वरूपकरके अपने स्वरूपके धारक.

८४४ शोभनमास्यं यस्येति–[ स्वास्यः ]

अर्थ—सुन्दरहै आस्य नाम मुख जिनका.

८४५ अन्यस्य वंशिनो वंशाः पाश्चात्या अस्य वंश-प्रपञ्चः प्राक् अनेन पाश्चात्य इति-[ प्राग्वंशः ]

अर्थ—भगवद्व्यतिरिक्त वंशवालोंके. वंश पश्चात् होनेवालेहैं जिनका प्रपञ्च रूप वंश संपूर्णोंकी अपेक्षासे पूर्व होनेवालाहै.

८४६ वंशं प्रपञ्चं वर्धयन्-[ वंशवर्धनः ]

अर्थ—प्रपंचरूपवंशकी वृद्धि करनेवाले.

**भारभृत्कथितो योगी योगीशः सर्वकामदः ॥ आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥ ९१ ॥**

८४७ अनन्तादिरूपेण भुवोभारं बिभ्रत् इति-[ भारभृत् ]

अर्थ—अनन्त नाम शेष आदिरूपसें पृथिवीके भारको धारण-करनेवाले.

८४८ सर्वैर्वेदैः कथितः इति-[ कथितः ]

अर्थ—जिनका संपूर्णवेद कथनकरतेहैं. अर्थात् संपूर्णवेदसें वेद्यहैं. (प्र० ) "सर्वे वेदा यत्पदमामनन्ति" इति श्रुतिः ।

८४९ योगो ज्ञानं तेनैव गम्यत्वात्-[ योगी ]

अर्थ—जो ज्ञानसेंही गम्य.

८५० अन्ये योगिनो योगान्तरायैर्हन्यन्ते स्व-

रूपात् प्रमाद्यन्ति अयं तु तद्रहितत्वात्
तेषामीशः-[ योगीशः ]

अर्थ-अन्य जो योगीहै सो योगके विघ्नोंसें स्वरूपसें च्युत हो-
जातेहैं यह भगवान्‌है सो विघ्नसें रहितहै इससें योगियोंके ईश.

८५१ सर्वान्ःकामान् ददातीति-[ सर्वकामदः ]

अर्थ-संपूर्ण कामोंको देनेवाले.

८५२ आश्रमवतां सर्वेषां संसारारण्ये भ्रमतां
विश्रामस्थानत्वात्-[ आश्रमः ]

अर्थ-संसाररूपीवनमें भ्रमणकरनेवाले पुरुषोंके विश्रामके स्थान.

८५३ अविवेकिनः सन्तापयतीति-[ श्रमणः ]

अर्थ-अविवेकी पुरुषोंको संताप देनेवाले.

८५४ क्षामाः क्षीणाः सर्वाः करोतीति-[ क्षामः ]

अर्थ-संपूर्ण प्रजाको क्षीण करनेवाले.

८५५ शोभनानि पर्णानि छन्दांसि संसारतरु-
रूपेण अस्येति-[ सुपर्णः ]

अर्थ-संसारतरुरूपकरके शोभनहै छन्दरूप पर्ण जिसके.

८५६ वायुर्वहति यद्भीत्या भूतानि सः-[ वायुवाहनः ]

अर्थ-जिनके भयसें प्राणियोंमें वायु संचारकरताहै. ( प्र० )
"भीषास्माद्वातः पवते " इति श्रुतिः ।

धनुर्धरो धनुर्वेदो दण्डो दमयिता द-
मः ॥ अपराजितः सर्वसहो निय-

न्ता नियमो यमः ॥ ९२ ॥ ॥

८५७ श्रीमान्नामो धनुर्धारयामासेति-[ धनुर्धरः ]

अर्थ-श्रीरघुनाथस्वरूपसे धनुष्यको धारणकरनेवाले.

८५८ सएव दाशरथिः धनुर्वेदं वेत्तीति-[ धनुर्वेदः ]

अर्थ-श्रीरघुनाथरूपसें धनुर्विद्याको. जाननेवाले.

८५९ दमनं दमयताम्-[ दण्डः ]

अर्थ-दंडदेनेवालोंमें दण्डरूप. ( प्र० ) "दण्डो दमयतामस्मि" इति गीता।

८६० वैवस्वतनरेन्द्रादिरूपेण प्रजा दमयतीति-[ दमयिता ]

अर्थ-यमराजा आदिरूपसें प्रजाको दमन करावनेवाले.

८६१ दम्येषु दण्डकार्यफलं तच्च स एवेति-[ दमः ]

अर्थ-दण्ड दण्डका फल स्वयं आपहीहै.

८६२ शत्रुभिर्न पराजितः इति-[ अपराजितः ]

अर्थ-शत्रुवोंसेंही जो पराजित नहींहोवे.

८६३ सर्वकर्मसु समर्थः इति सर्वान् शत्रून् सहते इति वा-[ सर्वसहः ]

अर्थ-सब कार्यकरनेमें समर्थ नाम धुरंधर १ संपूर्णशत्रुओंको सहनेवाले अर्थात् शत्रुओंका अनादर करनेवाले २

८६४ सर्वान् स्वेषु कृत्येषु व्यवस्थापयति इति-[ नियन्ता ]

अर्थ–संपूर्ण पुरुषोंको अपने अपने कार्योंमें लगानेवाले.

८६५ न नियमो नियतिस्तस्य विद्यते इति–
[ अनियमः ]

अर्थ–जिनका नियम नाम नियति नहीं.

८६६ सर्वनियन्तुः नियन्त्रन्तराभावात् नास्य
विद्यते यमो मृत्युः इति–[ अयमः ]

अर्थ–संपूर्णोंके नियमनकरनेवाले भगवान्का इतर कोई नियन्ता नहीं इसहेतुसें यम नाम मृत्यु जिनके विद्यमान नहीं. और यम नियम. यह ऐसाही दोनाम जानना अर्थ ये है कि नियम यम ऐसे दो योगके अंगहै तिनकरके रहित नियम और यम.

सत्त्ववान्सात्त्विकः सत्यः सत्यधर्मपरायणः ॥ अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः ॥ ९३ ॥

८६७ शौर्यादिकं सत्त्वमस्येति–[ सत्त्ववान् ]

अर्थ–शौर्यादिकरूपहै सत्त्व जिनके.

८६८ सत्त्वे गुणे प्राधान्येन स्थितः इति–[ सात्त्विकः ]

अर्थ–प्रधानतासें सत्त्वगुणमें स्थित.

८६९ सत्सु साधुत्वात्–[ सत्यः ]

अर्थ–सत्पुरुषोंमें साधुस्वभावसें रहनेवाले.

८७० सत्ये यथार्थकथने धर्मेच चोदनालक्षणे
नियतः इति–[ सत्यधर्मपरायणः ]

अर्थ-यथार्थकथनमें और विधिप्रतिपाद्य धर्ममें निष्णात.

८७१ अभिप्रेयते पुरुषार्थकाङ्क्षिभिः आभिमुख्येन प्रलयेऽस्मिन् प्रैति जगदिति वा-[अभिप्रायः]

अर्थ-पुरुषार्थकी आकांक्षाकरनेवाले पुरुषोंके प्रार्थनाके गोचर १ जिसमें जगत् प्रलयकालमें लीनहोजावे.

८७२ प्रियाणि इष्टान्यर्हतीति-[प्रियार्हः]

अर्थ-प्रिय नाम इष्टवस्तुओंके योग्य.

८७३ पूजासाधनैः पूजनीय इति-[अर्हः]

अर्थ-पूजाके साधनोंकरके पूजनीय.

८७४ न केवलं प्रियार्ह एव किंतु स्तुत्यादिभिः भजतां प्रियं करोतीति-[प्रियकृत]

अर्थ-भगवान् केवल प्रियार्ह नहीं किंतु स्तुतिआदिकरके भजनकरनेवाले पुरुषोंका प्रिय नाम अभीष्ट करनेवाले.

८७५ तेषामेव प्रीतिं वर्धयतीति-[प्रीतिवर्धनः]

अर्थ-भजनकरनेवालोंहीके प्रीतिके वर्धक.

**विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ॥ रविर्विरोचनः सूर्यः सविता रविलोचनः ॥ ९४ ॥**

८७६ विहायसं गतिराश्रयोऽस्येति-[विहायसगतिः]

अर्थ-विहायस नाम आकाशहै गति नाम आश्रय जिनका.

८७७ स्वयमेव द्योतते इति-[ज्योतिः]

अर्थ-स्वयं प्रकाशस्वरूप.

८७८ शोभना हविर्दीप्तिरिच्छा वा अस्येति-[सुरुचिः]

अर्थ-सुन्दरहै प्रकाश और इच्छा जिनकी.

८७९ समस्तदेवतोद्देशेन प्रवृत्तेष्वपि कर्मसु हुतं भुङ्क्ते इति-[हुतभुक्]

अर्थ-संपूर्ण देवतोंकी प्रसन्नताकेलिये प्रवृत्त जो यज्ञादिक कर्म तिन्होंकेविषे आहुतीकूं भोगनेवाले.

८८० स सर्वत्र वर्तमानः त्रयाणां लोकानां विभुत्वात्-[विभुः]

अर्थ-सर्वत्र वर्तमानहुये अर्थात् व्याप्तहुये तीनों लोकके स्वामी.

८८१ रसानादत्ते इति-[रविः]

अर्थ-आदित्यरूपसें रसको ग्रहणकरनेवाले.

८८२ विविधं रोचत इति-[विरोचनः]

अर्थ-नानाप्रकारसें प्रकाः

८८३ सूते श्रियमिति सूर्योऽग्निर्वा-[सूर्यः]

अर्थ-सूर्यरूपसें ऐश्वर्यकी उत्पत्तिकरनेवाले.

८८४ सर्वस्य जगतः प्रसविता-[सविता]

अर्थ-संपूर्णजगत्के उत्पादक.

८८५ रविर्लोचनं चक्षुरस्येति-[रविलोचनः]

अर्थ-सूर्यहै चक्षु नाम नेत्र जिनका.

**अनन्तो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः ॥ अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ॥ ९५ ॥ ॥**

८८६ नित्यत्वात् सर्वगतत्वात् देशकालपरिच्छेदाभावात्-[अनन्तः]

अर्थ-नित्य व्यापकस्वरूपसें देशकालपरिच्छेद रहित अथवा शेषरूप.

८८७ हुतं भुनक्ति इति-[हुतभुक्]

अर्थ-हवनकिये द्रव्यके भोगनेवाले.

८८८ प्रकृतिं भोग्यामचेतनां भुङ्क्ते जगत्पालयतीति वा-[भोक्ता]

अर्थ-मायाके भोगनेवाले १ जगत्की रक्षाकरनेवाले २

८८९ भक्तानां सुखं मोक्षलक्षणं ददाति असुखं खण्डयतीति वा-[सुखदः-असुखदः]

अर्थ-भक्तोंकूं मोक्षरूपसुख देनेवाले १ भक्तोंके दुःखका खण्डन करनेवाले २

८९० धर्मगुप्तये असकृज्जायमानत्वात्-[अनेकजः]

अर्थ-धर्मरक्षाकेलिये वारंवार जन्मलेनेवाले.

८९१ अग्रे जायते इति-[अग्रजः]

अर्थ–सबसें प्रथम उत्पन्नहोनेवाले हिरण्यगर्भ. (प्र० ) "हिरण्यगर्भः समवर्ततात्रे" इति श्रुतिः ।

८९२ अवाप्तसर्वकामत्वात् प्राप्तिहेत्वभावान्निर्वेदोस्य नास्तीति–[ अनिर्विण्णः ]

अर्थ–अवाप्तसमस्तकामहोनेसें वैराग्यरहित.

८९३ साधून् सतः आभिमुख्येन मृष्यते क्षमत इति–[ सदामर्षी ]

अर्थ–श्रेष्ठपुरुषोंको अभिमुखभावसें सहनेवाले.

८९४ तमाधारमधिष्ठाय त्रिलोकास्तिष्ठन्तीति–[ लोकाधिष्ठानम् ]

अर्थ–जिसमें लोकत्रयवर्तिपुरुष स्थितहैं.

८९५ अद्भुतत्वात् स्वरूपशक्तिव्यापारकार्येऽद्भुतत्वाद्वा–[ अद्भुतः ]

अर्थ–आश्चर्यस्वरूपहैं १ अथवा जिनका कार्य आश्चर्यवालाहै २

**सनात्सनातनतमः कपिलः कपिरव्ययः। स्वस्तिद स्वस्तिकृत्स्वास्ति स्वस्तिभुक्स्वास्तिदक्षिणः ॥ ९६ ॥**

८९६ सनादिति निपातः–[ सनात् ]

अर्थ–पराधंकालरूपहै. ( प्र० ) "चिरार्धवचनः कालः" इति वि० पु० ।

८९७ सर्वकारणत्वात् विरिञ्चादीनामपि सनातनानां सनातनत्वात्-[सनातनतमः]

अर्थ-संपूर्णोंके कारण जो ब्रह्मादिक तिनकेभी कारण.

८९८ वडवानलस्य कपिलो वर्ण इवं तद्रूपी-[कपिलः]

अर्थ-वडवानल अग्निकेसमान वर्णवाले.

८९९ कं जलं रश्मिभिः पिबन् वराहो वा-[कपिः]

अर्थ-क नाम जल तिसको किरणकरके सूर्यरूपसे पीनेवाले १ अथवा वराहरूप २ (प्र०) "कपिर्वराहः श्रेष्ठश्च" इति भगवद्वचनम्।

९०० अव्यये प्रलयेऽस्मिन् न व्येति इति-[अव्ययः]

अर्थ-प्रलयमेंभी जिनका नाशनहीं.

इति श्रीविष्णुसहस्रनामचन्द्रिकायां भाषाटीकायां नवमशतकं सम्पूर्णम्।

# विष्णुसहस्रनामचन्द्रिकायां

## (भाषाटीकायाम्)

## दशमशतकप्रारम्भः।

---

९०१ भक्तानां मङ्गलं ददातीति-[स्वस्तिदः]

अर्थ-भक्तोंकूं मंगलदेनेवाले.

९०२ तदेव करोतीति-[स्वस्तिकृत्]

अर्थ-भक्तोंका मंगलकरनेवाले.

९०३ मङ्गलं स्वरूपमात्मीयं परमानन्दलक्षण-
मिति-[स्वस्ति]

अर्थ-मंगलस्वरूपहै.

९०४ तदेव भुङ्क्ते इति भक्तानां मङ्गलं स्वस्ति
भुनक्तीति वा-[स्वस्तिभुक्]

अर्थ-परमानन्दलक्षणस्वरूपकेभोक्ता १ भक्तोंके मंगलके पालनकरनेवाले २

९०५ स्वस्तिरूपेण दक्षते वर्धते स्वस्तिविधातुं समर्थ इति वा अथवा दक्षिणशब्दः आशुकारिणि वर्तते शीघ्रं स्वस्ति दातुं अयमेव समर्थः इति-[स्वस्तिदक्षिणः]

अर्थ-मंगलरूपसें वृद्धिवाले १ मंगलविधानकरनेमें समर्थ २ दक्षिणशब्द शीघ्रकारिका वाचकहै तब यह अर्थ है कि भक्तोंके शीघ्र मंगलकरनेमें आपही समर्थहै ३ (प्र०) "स्मरणादेव कृष्णस्य सिद्ध्यन्ति सर्व सिद्धयः। स्मृते सकलकल्याणभाजनं यत्र जायते ॥ पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम्। स्मरणादेव कृष्णस्य पापसंङ्घातपञ्जरम् ॥ शतधा भेदमायाति गिरिर्वज्रहतो यथा" इत्यादि।

अरौद्रः कुण्डली चक्री विक्र

तशासनः ॥ शब्दातिगः शब्दसहः

शिशिरः शर्वरीकरः ॥ ९७॥ ॥

९०६ अवाप्तसमस्तकामत्वेन रागद्वेषादेरभावात्-[ अरौद्रः ]

अर्थ—रागद्वेषके नहींहोनेसें सौम्यस्वरूप.

९०७ शेषरूपभाक् साङ्ख्ययोगात्मके कुण्डले मकराकारे अस्य स्त इति वा-[ कुण्डली ]

अर्थ—शेषरूपधारी १ मकराकारसांख्य-योग नाम ज्ञान- कर्म ये हैं कुण्डल जिनके २.

९०८ चक्रमस्यास्तीति-[ चक्री ]

अर्थ—चक्रधारणकरनेवाले.

९०९ विक्रमः पादविक्षेपः शौर्यं वा द्वयं चाशेषरूपेभ्यो विलक्षणमस्येति-[ विक्रमी ]

अर्थ—जिनका पादका विक्षेप और शौर्य सबसें विलक्षण नाम उत्कृष्ट है.

९१० श्रुतिस्मृतिलक्षणमूर्जितं शासनमस्येति-[ ऊर्जितशासनः ]

अर्थ—श्रुति-स्मृतियही जिनका प्रबलशिक्षा है. (प्र०) "श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते। आज्ञाच्छेदी मम द्वेषी मद्भक्तोपि न वैष्णवः" ॥ इति भगवद्वचनम्।

९११ शब्दप्रवृत्तिहेतूनां जात्यादीनामसंभवात् शब्देन वक्तुमशक्यत्वात्-[ शब्दातिगः ]

अर्थ—जिसमे प्रवृत्तिनिमित्तजात्यादिकोंका अभाव होनेसें श-

ब्दका अगोचर है. ( प्र० ) "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" "न शब्दगोचरैर्यस्य योगिध्येयं परं पदम्" इति श्रुति-स्मृती।

९१२ सर्वे वेदाः तात्पर्येण तमेव वदन्तीति-

[शब्दसहः]

अर्थ-संपूर्ण वेद तात्पर्यसें तिसहीकूं कहते हैं. ( प्र० ) "सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्यः" इति श्रुति-स्मृती।

९१३ तापत्रयाभितप्तानां विश्रमस्थानत्वात्-

[शिशिरः]

अर्थ-तापत्रयसें अभितप्तपुरुषोंके विश्रांतिके स्थान.

९१४ संसारिणामात्मा शर्वरी ज्ञानिनां पुनः संसारः शर्वरी तामुभयेषां करोतीति-

[शर्वरीकरः]

अर्थ-संसारियोंके आत्मस्वरूप शर्वरी नाम रात्रि करनेवाले ज्ञानियोंके संसाररूप रात्रिकरनेवाले.

**अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणांवरः॥ विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ ९८॥ ॥**

९१५ अवाप्तसमस्तकामाभावादेव क्रौर्याभावः तस्मात्क्रौर्यमस्य नास्तीति-[अक्रूरः]

अर्थ-अवाप्त समस्तकाम होनेसें कामका अभाव है तिससें जिनके क्रौर्य नाम कोप नहीं.

९१६ कर्मणा मनसा वाचा वपुषा च शोभनत्वात्-[पेशलः]

अर्थ-कर्म, मन, वाणी शरीरकरके शोभावाले.

९१७ प्रवृद्धशक्तिः शीघ्रकारी समर्थः इति-[दक्षः]

अर्थ-जिनकेविषे नियमसें प्रवृद्धशक्ति आदि गुणहैं.

९१८ दक्षिणशब्दस्यापि दक्ष एवार्थः अथवा दक्षते गच्छति हिनस्तीति-[दक्षिणः]

अर्थ-दक्षिणशब्दकाभी दक्षही अर्थ है १ अथवा विरोधिपुरुषोंके हिंसा करनेवाले २

९१९ क्षमावतां योगिनां पृथिव्यादीनां वा वरणाच्च श्रेष्ठः इति-[क्षमिणां वरः]

अर्थ-क्षमावाले योगियोंमें श्रेष्ठ १ पृथ्वीआदिकोंमें श्रेष्ठ २ (प्र०) "क्षमया पृथिवीसमः" इति रामायणम्।

९२० निरस्तातिशयं ज्ञानं सर्वदा सर्वगोचरमस्यास्ति नेतरेषामिति-[विद्वत्तमः]

अर्थ-जिनको सर्वकालमें अत्यन्त उत्कृष्ट सर्वविषयक ज्ञानहै. इतर पुरुषोंको तथाविध ज्ञान नहीं.

९२१ विगतं भयं सांसारिकं संसारलक्षणमस्येति-[वीतभयः]

अर्थ-दूरहोगयाहै संसाररूपभय जिनका.

९२२ सर्वेश्वरत्वान्नित्यमुक्तत्वाच्च पुण्यं पुण्यकरं श्रवणं कीर्तनं चास्येति-[पुण्यश्रवणकीर्तनः]

अर्थ—संपूर्णोंके ईश्वरहोनेसें तथा नित्यमुक्तहोनेसें पुण्यके करनेवालेहै श्रवण कीर्तन जिनके.

**उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्न-नाशनः ॥ वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥ ९९ ॥ ॥**

९२३ संसारसागरात् उत्तारयतीति–[ उत्तारणः ]

अर्थ—संसाररूप समुद्रसें पारकरनेवाले.

९२४ दुष्कृतिं पापसंज्ञितां हन्तीति–[ दुष्कृतिहा ]

अर्थ—पापरूपदुष्कृतिका नाश करनेवाले.

९२५ स्मरणादिकुर्वतां पुण्यं करोतीति सर्वेषां श्रुति-स्मृतिलक्षणया वाचा पुण्यमाचष्टे इति वा–[ पुण्यः ]

अर्थ—स्मरणकरनेवाले पुरुषोंके पुण्यकरनेवाले १ संपूर्णपुरुषोंके श्रुति-स्मृतिरूप वाणीकरके पुण्यकहनेवाले २

९२६ भाविनोऽर्थस्य सूचकान् दुःस्वप्नान् नाशयतीति–[ दुःस्वप्ननाशनः ]

अर्थ—भावीनाम होनेंवाला जो अर्थ तिसका सूचक जो दुःस्वप्न तिन्होंके नाश करनेवाले.

९२७ विविधाः संसारिणां गतीर्मुक्तिप्रदानेन हन्तीति–[ वीरहा ]

अर्थ-मुक्ति देनेसें संसारियोंकी नानाप्रकारकी गतियोंके नाशकरनेवाले.

९२८ सत्त्वगुणमधिष्ठाय जगत्त्रयं रक्षयन्-[रक्षणः]

अर्थ-सत्वगुणके आश्रय होकर अर्थात् स्वीकारकर तीनोंलोककी रक्षाकरनेवाले.

९२९ सन्मार्गवर्तिनः सन्तः तद्रूपेण विद्याविनय-
वृद्धये स एव वर्तते इति-[सन्तः]

अर्थ-सन्मार्गमें चलनेवाले पुरुष सच्छब्दवाच्यहै. सद्रूपसें आपही विद्याविनय-वृद्धिकेलिये होनेवाले.

९३० सतीः सर्वाः प्रजाः प्राणरूपेण जीवयन्-
[जीवनः]

अर्थ-प्राणरूपसें प्रजाको जीवावनेवाले.

९३१ परितः सर्वतो विश्वं व्याप्य व्यवस्थितः
इति-[पर्यवस्थितः]

अर्थ-चारोंओरसे विश्वमें व्याप्त होकर स्थितिकरनेवाले.

**अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भ-**
**यापहः ॥ चतुरस्रो गभीरात्मा वि-**
**दिशो व्यादिशो दिशः ॥ १०० ॥**

९३२ अनन्तादिरूपेण विश्वप्रपञ्चरूपेण स्थि-
तश्चेति-[अनन्तरूपः]

अर्थ-जगद्रूपसें स्थित.

९३३ अनन्ता अपरिमिता श्रीः परशक्तिरस्ये-
ति-[ अनन्तश्रीः ]

अर्थ-अपरिमितहै परशक्ति जिनकी अर्थात् विलक्षण शक्तिवाले.

९३४ मन्युः क्रोधो जितो येन सः-[ जितमन्युः ]

अर्थ-क्रोधको जीतनेवाले.

९३५ भयं संसारजं पुंसां घ्नन् इति-[ भयापहः ]

अर्थ-पुरुषोंके संसारजन्य भयको दूरकरनेवाले.

९३६ न्यायसमवेतश्चतुरः-[ चतुरस्रः ]

अर्थ-नीतियुक्त चतुर अर्थात् पुरुषोंकूं कर्मानुरूप फलदेनेवाले.

९३७ आत्मस्वरूपं वित्तं च गभीरं परिच्छे-
तुमशक्यमस्येति-[ गभीरात्मा ]

अर्थ-जिनके आत्मस्वरूप वित्त नाम धनका परिच्छेद नाम इतनाहै ये कहनेमें अशक्य.

९३८ विविधानि फलानि अधिकारिभ्यो विशे-
षेण दिशतीति-[ विदिशः ]

अर्थ-अधिकारी जनोंको नानाप्रकारके फलको देनेवाले.

९३९ विविधामाज्ञां शक्रादीनां कुर्वन्-[ व्यादिशः ]

अर्थ-इन्द्रआदिकोंकूं नानाप्रकारकी आज्ञा करनेवाले.

९४० दिशतीति-[ दिशः ]

अर्थ-शक्रादिकोंकूं आज्ञा देनेवाले.

अनादिर्भूर्भुवोलक्ष्मीः सुवीरो रु-

दिः ॥ जननो जनजन्मादि-
र्भीमो भीमपराक्रमः ॥ १०१ ॥ ॥

९४१ आदिः कारणमस्य न विद्यते इति–[ अनादिः ]
अर्थ–जिनका अन्यत्र कोई कारण नहीं.

९४२ भूम्यन्तरिक्षयोःशोभेति–[ भूर्भुवोलक्ष्मीः ]
अर्थ–भूलोक अन्तरिक्षलोक इन्होंके शोभारूप.

९४३ शोभना विविधा ईरा गतयो यस्य शोभनं
विविधमीरणमस्येति वा–[सुवीरः ]
अर्थ–सुन्दरहै गतिजिनकी १ सुन्दरहै नांनाप्रकारकी प्रेरणा-
जिनकी २

९४४ रुचिरे कल्याणे अङ्गदे अस्येति–[ रुचिराङ्गदः ]
अर्थ–सुन्दरहै बाहुभूषण जिनके.

९४५ जन्तून् जनयन्–[ जननः ]
अर्थ–जन्तुओंके उत्पत्ति करनेवाले.

९४६ जनस्य जनिमतो जन्म उद्भवः तस्यादि-
मूलकारणमिति–[ जनजन्मादिः ]
अर्थ–जीवोंका जन्मनाम उत्पत्ति तिसके आदिकारण.

९४७ भयहेतुत्वात्–[ भीमः ]
अर्थ–भयदेनेवाले.

९४८ असुरादीनां भयहेतुः पराक्रमोऽस्यावतार
इति–[भीमपराक्रमः]

अर्थ–असुर आदिकोंके भयका कारण है पराक्रम जिनका.

आधारनिलयो धाता पुष्पहासः प्रजागरः ॥ ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥ १०२ ॥ ॥

९४९ पृथिव्यादीनां पञ्चभूतानामाधाराणामाधारत्वात्--[ आधारनिलयः ]

अर्थ–जगत्के आधारभूत जो पृथ्वी आदि पंचभूत तिनकेभी आधार.

९५० तस्यान्यो धाता नास्तीति-- संहारसमये सर्वाः प्रजाः धारयति पिबतीति वा--
[ अधाता-धाता ]

अर्थ--जिनका अन्यत्र कोई धारणकरनेवाला नहीं १ प्रलयसमयमें सबको धारणकरनेवाले और पीनेवाले २

९५१ मुकुलात्मना पुष्पाणां स्थितानां हासवत् प्रपञ्चरूपेण विकारोऽस्येति--[ पुष्पहासः ]

अर्थ--मुकुल नाम कलीरूपसें स्थित जो पुष्प तिन्होंका जो हास नाम खिलना उसकें समान प्रपंच रूपसेंहै विकार जिनका.

९५२ नित्यप्रबुद्धरूपत्वात् प्रकर्षेण जागर्तीति–[ प्रजागरः ]

अर्थ–सदा प्रबुद्धरूप होनेसें जाग्रत्स्वरूप अर्थात् प्रकाशमानहै.

९५३ सर्वेषामुपरि तिष्ठन्–[ उर्ध्वगः ]

अर्थ--सबसें ऊंचे रहनेवाले.

९५४ सतां कर्माणि सत्पथेन आचरत्येषः इ-
ति-[सत्पथाचारः]

अर्थ--सत्पुरुषोंके कर्म समीचीन प्रक्रियासें आचरण करनेवाले.

९५५ मृतान् परीक्षित्प्रभृतीन् जीवयन् इति-
[प्राणदः]

अर्थ-परीक्षित् आदि मरणेवालोंको जीवदान देनेवाले.

९५६ प्रणवो नाम परमात्मनो वाचकः ॐकारः
तद्भेदोपचारेणायंम्-[प्रणवः]

अर्थ- ॐकार ये नाम परमात्माकाहै कारण वाच्यवाचकका अभेद होनेसें.

९५७ पणान् व्यवहारार्थान् कुर्वन् इति-[पणः]

अर्थ-व्यावहारिक पदार्थोंके रचनेवाले.

**प्रमाणं प्राणनिलयः प्राणभृत्प्राण-
जीवनः॥ तत्त्वं तत्त्वविदेकात्मा जं-
न्ममृत्युजरातिगः ॥ १०३ ॥ ॥**

९५८ प्रमितिः स्वयं प्रमा इति-[प्रमाणम्]

अर्थ-प्रमा ज्ञानस्वरूप.

९५९ प्राणा इन्द्रियाणि यत्र जीवे निलीयन्ते तत्पर-
त्वाद्देहस्य धारकाः प्राणापानादयो वा

तास्मिन् प्रविलीयन्ते प्राणितीति प्राणो जीवः
परे पुंसि विलीयते इति वा प्राणान् जी-
वांश्च संहरन्निति वा–
[ प्राणनिलयः ]

अर्थ–प्राणइन्द्रिय जिसमें लीनहोवें ऐसा जीवरूप १ जिसमें प्राणापानादिक लयको प्राप्त होतेहैं २ जीवरूप जिसमें लीन होताहै ३ जीवोंका संहार करनेवाले ४

९६० पोषयन्नन्नरूपेण प्राणान् इति–[ प्राणभृत् ]

अर्थ–अन्नरूपसें प्राणोंके पोषण अर्थात् रक्षण करनेवाले.

९६१ प्राणिनो जीवयन्प्राणाख्यैरन्यैरिति–
[ प्राणजीवनः ]

अर्थ–प्राणाख्य वायुवोंकरके प्राणियोंको जिवावनेवाले.

९६२ तथ्यममृतं सत्यं परमार्थसत्तत्त्वमित्यतः ए-
कार्थवाचकत्वात्–[ तत्त्वम् ]

अर्थ–तथ्य अमृतआदि शब्द पर ब्रह्मरूप तत्वके वाचकहै इ-स हेतुसें तत्त्वस्वरूप.

९६३ तत्त्वं स्वरूपं यथावद्वेत्तीति–[ तत्त्ववित् ]

अर्थ–स्वरूपको यथार्थजाननेवाले.

९६४ एकश्चासावात्मा च–[ एकात्मा ]

अर्थ–आपही एक आत्मस्वरूपहै.

९६५ अस्ति जायते वर्धते विपरिणमते अपक्षीयते

नश्यतीति षड्भावविकारानतीत्य गच्छतीति-
[जन्ममृत्युजरातिगः]

अर्थ--जन्मसें आदिलेकर षड्विकारोंको उल्लंघन करनेवाले.

**भूर्भुवःस्वस्तरुस्तारः सपिता प्रपि-
तामहः ॥ यज्ञो यज्ञपतिर्यज्वा य-
ज्ञाङ्गो यज्ञवाहनः ॥ १०४ ॥ ॥**

९६६ भूर्भुवःस्वःसमाख्यानिव्याहृतिरूपाणि त्रयी-
साराणि बह्वृचा आहुः तैर्होमादिना तरति प्लु-
वते च लोकत्रयं वृक्षवद्व्याप्य तिष्ठतीति
वा-[भूर्भुवःस्वस्तरुः]

अर्थ—वेदत्रयका सारभूत जो भूर्भुवः स्वः यह तीन व्याहृ-
ति इन्होंकरके जो होमादिक तिसकरके जगत्त्रयको तारणेवाले १
वृक्षकी समान लोकत्त्रयमें व्याप्तहोकर स्थिति करनेवाले २

९६७ संसारसागरं तारयन् प्रणवो वा
इति-[तारः]

अर्थ--संसाररूप समुद्रमें तारनेवाले१ प्रणव नाम ॐकारस्वरूप २

९६८ सर्वस्य लोकस्य जनकः इति-[सपिता]

अर्थ—समस्तलोकके पिता.

९६९ पितामहस्य ब्रह्मणोपि पितेति-[प्रपितामहः]

अर्थ—पितामह जो ब्रह्मा तिसकेभी पिता.

९७० यज्ञात्मना-[यज्ञः]

अर्थ-यज्ञस्वरूप.

९७१ यज्ञानां पाता स्वामी वा-[यज्ञपतिः]

अर्थ-यज्ञोंका रक्षक १ यज्ञोंकेस्वामी २ (प्र०) "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति गीता।

९७२ यजमानात्मना तिष्ठन्-[यज्वा]

अर्थ-यजमानरूपसें यज्ञमें स्थितिकरनेवाले.

९७३ यज्ञा अङ्गान्यस्येति-[यज्ञाङ्गः]

अर्थ-यज्ञहैं अंग जिनके अर्थात् यज्ञमूर्ति भगवान्.

९७४ फलहेतुभूतान् यज्ञान् वाहयतीति-[यज्ञवाहनः]

अर्थ-स्वर्गप्राप्त्यादि फलके हेतुभूत जो यज्ञ तिन्होंके निर्वाहक.

यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ॥ यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥ १०५ ॥ ॥

९७५ यज्ञं बिभर्ति पाति वा-[यज्ञभृत्]

अर्थ-यज्ञके धारण करनेवाले १ यज्ञकी रक्षा करनेवाले २

९७६ जगदादौ तदन्ते च यज्ञं करोतीति कृन्तति वा-[यज्ञकृत्]

अर्थ-जगत्के आदिमें यज्ञ करनेवाले १ जगत्के अंतमें यज्ञका छेदन करनेवाले २

९७७ यज्ञानां तत्समाराध्यात्मना शेषीति-[यज्ञी]

अर्थ-संपूर्ण यज्ञोंके आराध्यहोनेसें शेषी नाम स्वामी.

९७८ यज्ञं भुङ्क्ते भुनक्तीति वा-[यज्ञभुक्]

अर्थ-यज्ञके भोगनेवाले १ यज्ञके पालक २

९७९ यज्ञसाधनं तत्प्राप्ताविति-[यज्ञसाधनः]

अर्थ-यज्ञकी प्राप्तिमें साधन.

९८० यज्ञस्यान्ते फलप्राप्तिं कुर्वन् पूर्णाहुत्या वा यज्ञसमाप्तिं करोतीति वा-[यज्ञान्तकृत्]

अर्थ-यज्ञके अन्तमें फलकीप्राप्ति करनेवाले १ पूर्णाहुति करके यज्ञकी समाप्ति करनेवाले २.

९८१ यज्ञानां गुह्यं ज्ञानयज्ञं फलाभिसन्धिरहितो वा यज्ञः तदभेदोपचारात् ब्रह्म-[यज्ञगुह्यम्]

अर्थ-यज्ञोंमें गुह्य अर्थात् ज्ञानयज्ञस्वरूप १ फलोंकी अभिसंधि नाम अभिप्रायरहित जो यज्ञ तद्रूप ब्रह्मस्वरूप २

९८२ अद्यते अत्ति च भूतानीति-[अन्नम्]

अर्थ-जो खायेजावें १ और जो खानेमें आताहै २

९८३ अन्नमत्तीति-[अन्नादः]

अर्थ-अन्नको खानेवाले.

**आत्मयोनिः स्वयंजातो वैखानः सामगायनः ॥ देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥ १०६ ॥**

९८४ आत्मैव योनिरुपादानकारणमिति-
[आत्मयोनिः]

अर्थ-आपही उपादानकारणस्वरूप अन्य कोई नहीं.

९८५ निमित्तकारणमपि सएवेति-[स्वयंजातः]

अर्थ-आपही निमित्तकारण.

९८६ विशेषेण खननात्-[वैखानः]

अर्थ--पृथ्वीको विशेषरूपसें खोदनेवाले. (प्र०) "पातालवासिनं हिरण्याक्षं वाराहं रूपमास्थाय जघान" इति पुराणे प्रसिद्धम्।

९८७ सामानि गायतीति-[सामगायनः]

अर्थ-सामवेदको गानेवाले.

९८८ देवक्याः सुतः-[देवकीनन्दनः]

अर्थ-देवकीके पुत्र.

९८९ यतः स्रष्टा सर्वलोकस्य इति-[स्रष्टा]

अर्थ-संपूर्णलोकके रचनाकरनेवाले.

९९० क्षितेर्भूमेरीशः दशरथात्मजः इति-[क्षितीशः]

अर्थ-क्षिति नाम पृथ्वीके ईश दशरथकी पुत्र श्रीरघुनाथरूप.

९९१ कीर्तितः पूजितो ध्यातः स्मृतः पापराशिं
नाशयन्-[पापनाशनः]

अर्थ-कीर्तन, पूजन, ध्यान, स्मरणके गोचरहुयेहुवे पापसमूहका नाशकरनेवाले. (प्र०) "प्राणायामसहस्रेण यत्पापं नश्यते नृणाम्। क्षणमात्रेण तत्पापं हरेर्ध्यानात्प्रणश्यति" इति वृद्धशातातपः।

चक्री शार्ङ्गधन्वा ग-
दाधरः ॥ रथाङ्गपाणिरक्षोभ्यः स-
र्वप्रहरणायुधः ॥ १०७ ॥ ॥

९९२ पाञ्चजन्याख्यं भूताद्यहंकारात्मकं शङ्खं
बिभ्रत् इति-[ शङ्खभृत् ].

अर्थ-पांचजन्य नामक जो भूतादि अहंकारात्मक शंख तिस-
को धारणकरनेवाले.

९९३ विद्यामयो नन्दकाख्योऽसिरस्येति-[ नन्दकी ]

अर्थ-नन्दकनामक विद्यामयरूप असि नाम खड्गवाले.

९९४ मनस्तत्त्वात्मकं सुदर्शनाख्यं चक्रमस्या-
स्तीति-[ चक्री ]

अर्थ-सुदर्शननामक मनस्तत्वस्वरूप चक्रवाले.

९९५ इन्द्रियाद्यहंकारात्मकं शार्ङ्गं नाम धनु-
रस्यास्तीति-[ शार्ङ्गधन्वा ]

अर्थ-इन्द्रियादि अहंकारस्वरूप शार्ङ्गधनुषवाले.

९९६ बुद्धितत्त्वात्मिकां कौमोदकीं गदां वह-
न्-[ गदाधरः ]

अर्थ-बुद्धितत्त्वस्वरूप कौमोदकीनामक गदाको धारणकर-
नेवाले.

९९७ रथाङ्गं चक्रमस्य पाणौ स्थितं स-[ रथाङ्गपाणिः ]

अर्थ-जिनके हाथमें चक्र स्थितहै.

९९८ अतएवाशक्यक्षोभणः इति-[ अक्षोभ्यः ]

अर्थ-हाथमें चक्र लेनेसेंही नहीं शक्यहै निग्रह जिनका.

९९९ केवलमेतावन्त्येवायुधान्यस्येति न नियम्यते अपि तु सर्वाण्येव प्रहरणान्यायुधान्यस्येति-

[ सर्वप्रहरणायुधः ]

अर्थ-जिनके इतने आयुधहैं ऐसा नियम नहीं किंतु असंख्यहैं प्रहारकरनेके आयुध जिनके.

१०००-[ सर्वप्रहरणायुधः ॐ नमः ]

अर्थ-आयुधभावसें अप्रसिद्ध करजआदि आयुध बहुतसें भगवान्केहै. यह जानलेनाकि नामकीआवृति भगवान्के हजारनामकी समाप्ति सूचन करतीहै. ॐकार मंगलका वाचकहै.

इति श्रीविष्णुसहस्रनामचन्द्रिकायां भाषाटीकायां दशमं शतकं सम्पूर्णम्।

---

श्रीः।

# अथ फलश्रुतिश्लोकाः।

इतीदं कीर्तनीयस्य केशवस्य महात्मनः ॥
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ १ ॥

अर्थ-इतिशब्द भगवान्के हजारनामकी समाप्तिका सूचकहै. कीर्तनीय महात्मा केशव भगवान्के दिव्य हजारनाम विशेषरूप-सें मैं कीर्तनकरचूका हों ॥ १ ॥

य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ॥
नाशुभं प्राप्नुयात्किञ्चित्सोऽमुत्रेह च मानवः ॥ २ ॥

अर्थ-जो पुरुष इसको नित्य श्रवणकरै और कीर्तनकरै उस पुरुषको इसलोकमें तथा परलोकमें किसीतरहके अशुभ नहीं हो- ॥ २ ॥

वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ॥
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥ ३ ॥

अर्थ-इस स्तोत्रका पाठकरके ब्राह्मण वेदान्तशास्त्रपारगामी, क्षत्रिय विजयको, वैश्य धनके वृद्धिको और शूद्र सुखको प्राप्तहोवें ॥ ३ ॥

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ॥
कामानवाप्नुयात्कामी प्रजार्थी प्राप्नुयात्प्रजाम् ॥ ४ ॥

अर्थ-धर्मार्थी धर्मको, अर्थार्थी अर्थको, कामनावाला कामों-को, प्रजार्थी प्रजाओंको इसस्तोत्रका पाठकर प्राप्तहोजावें ॥ ४ ॥

भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः ॥
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥ ५ ॥
यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च ॥
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥ ६ ॥

अर्थ–जो पुरुष प्रातःकाल उठकर पवित्रहोकर भगवान्में मन लगाकर भक्तिपूर्वक वासुदेव भगवान्के सहस्रनामका पाठ करै सो पुरुष विपुल यशको, ज्ञातिमें मुख्यताको और अचल श्रीको, अनुत्तम् श्रेयको प्राप्त होजाताहै ॥ ५ ॥ ६ ॥

न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ॥
भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ॥ ७ ॥

अर्थ–जो इस स्तवका पाठ करै उसको कोई प्रकारका भय प्राप्त नहीं होताहै और वीर्य तथा तेजको प्राप्त होताहै. रोगी अरोगी होजावे बलरूप गुणोंकरके अन्वितहुवा कांतिवाला होजाताहै ॥ ७ ॥

रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥
भयान्मुच्येत भीतस्तु मुच्येतापन्नआपदः ॥ ८ ॥

अर्थ–रोगार्तपुरुष रोगसें, बद्धपुरुष बन्धनसें, संसारसें भीतपुरुष भयसें, आपत्तियुक्त पुरुष आपदसें छूट जाताहै ॥ ८ ॥

दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ॥
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ ९ ॥

अर्थ–नित्य भक्तियुक्त पुरुष हजार नामसें पुरुषोत्तम भगवान्की स्तुति करताहुवा बडे दुःखोंसे शीघ्रही पार होजाताहै ॥ ९ ॥

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ॥
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ १० ॥

अर्थ–वासुदेव भगवान्हीहै आश्रय जिसके तथा वासुदेव भगवान्हीहै परायण नाम परमअनयस्थान् जिसके तथा सर्वपापोंसें शुद्ध होगयाहै अन्तःकरण जिसका ऐसा पुरुष सनातन ब्रह्मको प्राप्त होजाताहै ॥ १० ॥

न वासुदेवभक्तानामशुभं विद्यते क्वचित् ॥
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥ ११ ॥

अर्थ–वासुदेव भगवान्के भक्तोंका कदाचित्भी अशुभ नहीं होताहै और जन्म, मृत्यु, जरा, व्याधि एतत्प्रयुक्त भयभी नहीं ॥ ११ ॥

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ॥
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः॥ १२॥

अर्थ–श्रद्धा भक्तिसमन्वित पुरुष इस स्तोत्रका अध्ययन करताहुवा आत्म, सुख, क्षांति, श्री, धृति, स्मृति, कीर्ति इन्होंकरके युक्त होजाताहै ॥ १२ ॥

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ॥
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३ ॥

अर्थ–पुरुषोत्तम भगवान्की भक्ति करनेवाले पुरुषोंको क्रोध, मत्सरता, लोभ, अशुभमति यह नहीं होतीहै ॥ १३ ॥

द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ॥
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १४ ॥

अर्थ—महात्मा वासुदेव भगवान्के वीर्यसें स्वर्ग, चन्द्र, सूर्य, नक्षत्र, आकाश, दिशा, पृथ्वी, समुद्र, यह सब स्थित होरहेहैं ॥ १४ ॥

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ॥
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥ १५ ॥

अर्थ—देवता, असुर, गन्धर्व, यक्ष, उरग, राक्षस, अर्थात् चराचर श्रीकृष्ण भगवान्के वशमेंहै ॥ १५ ॥

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ॥
वासुदेवात्मकान्याहुः क्षेत्त्रं क्षेत्त्रज्ञ एव च ॥ १६ ॥

अर्थ—और मन, बुद्धि, अन्तःकरण, तेज, बल, धैर्य, क्षेत्त्र, क्षेत्त्रज्ञ वासुदेव भगवान्काही स्वरूपहै अर्थात् सब भगवत्स्वरूपहै ॥ १६ ॥

सर्वागमानामाचारः प्रथमं परिकल्प्यते ॥
आचारः प्रथमो धर्मो धर्मस्य प्रभुरच्युतः ॥ १७ ॥

अर्थ—सब वेदोंमें आचार यही कलपना कियागया है कि प्रथम धर्म्म आचारहीहै तिसके प्रभु अच्युत भगवान् हैं ॥ १७ ॥

ऋषयः पितरो देवा महाभूतानि धातवः ॥
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥ १८ ॥

अर्थ—ऋषि, पितृगण, महाभूत, सब धातु और समस्त स्थावर जंगमात्मक यह सब नारायणसें उत्पन्नहै ॥ १८ ॥

योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादि कर्म च ॥
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥ १९ ॥

अर्थ-योग, ज्ञान, सांख्य, विद्या, शिल्पविद्यासें आदिलेकर, कर्म, वेद और स्मृति, इतिहास, पुराण, शास्त्रोक्त ज्ञान यह संपूर्ण जनार्दन भगवान्सेंही उत्पन्नहै अर्थात् उक्त ज्ञानादिकोंकी प्राप्ति भगवान्केही आधीनहै ॥ १९ ॥

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ॥
त्रींल्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥२०॥

अर्थ-महद्भूतस्वरूपसें तो एकहैं और पृथक् पृथक् भूतरूपसें अनेक रूपहै विश्वको भोगनेवाले अविनाशी भूतोंको आत्मा एकही-विष्णुभगवान् लोकत्रयमें व्याप्त होकर विश्वको भोगतेहैं ॥ २० ॥

इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ॥
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ २१ ॥

अर्थ-जो पुरुष श्रेय नाम कल्याण और सुखकी प्राप्तिकी इच्छा करै सो पुरुष व्यासजीका कहाहुवा विष्णुभगवान्का इस स्तोत्रका पाठ करै ॥ २१ ॥

विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ॥
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥ २२ ॥

अर्थ-जो पुरुष जगत्के ईश्वर जन्मरहित जगत्को उत्पत्ति तथा नाश जिनसें होताहै उस पुण्डरीकाक्ष-भगवान्का जो भजन करतेहैं वह पुरुष पराभव नाम अनादरको प्राप्त नहीं होतेहैं ॥ २२ ॥

## इति फलश्रुतिश्लोकाः समाप्ताः ।

श्रीशालिवाहनशके बाणभूवसुभूमिते ।
अधिकाषाढराकायां गङ्गाविष्णोश्च सूचनात् ॥
विष्णोर्नामसहस्रीयभाष्य[1]स्यार्थावबोधकम् ।
भाषान्तरं संव्यरचि हैन्दव्या भाषया स्फुटम् ॥
महावनाख्यविदुषा विहाणीपुरवासिना ।
कल्याणमुद्रणागारे श्रीलक्ष्मीवेङ्कटेश्वरे ॥
अथापि चेन्मनुष्यत्वात् स्खलनं लेखने क्वचित् ।
क्षन्तुमर्हन्ति विद्वांसः सारमार्या हि गृह्णते ॥

१ शाङ्करभाष्यस्य ।

## इति श्रीविष्णुसहस्रनामचन्द्रिका समाप्ता

---

पुस्तक मिलनेका ठिकाणा–
गंगाविष्णु श्रीकृष्णदास
"लक्ष्मीवेङ्कटेश्वर" छापाखाना
कल्याण–(मुंबई)